व्याख्या–'यतः' यस्माल्लोके 'रागादीनां' रागद्वेषमोहानाम् 'अखिलः' समस्तो गणः 'समुदेति' उद्भवति। कीदृक्षः? इत्याह– 'आत्मात्मीयस्वभावाख्यः', अयमात्मा अयं चात्मीयः, पदे पदसमुदायोपचाराद् 'अयं परः', 'अयं च परकीय' इत्यादिभावो रागद्वेषनिबन्धनं तदाख्यः–तन्मूलो रागादीनां गण आत्मात्मीयरूपेण रागरूपः परकीयपरिणामेन च द्वेषरूपो यतः समुदेति समुदयः–समुदयो नाम तत्त्वम्, 'सम्मतः' बौद्धदर्शनेऽभिमत इति ॥६॥

अथ तृतीयचतुर्थतत्त्वे प्रपञ्चयन्नाह–

**क्षणिकाः सर्वसंस्कारा, इत्येवं वासना तु या।**
**स मार्ग इति विज्ञेयो, निरोधो मोक्ष उच्यते ॥७॥**

व्याख्या—सर्वसंस्काराः क्षणिकाः, सर्वेषां विश्वत्रयविवर्तमानानां घटपटस्तम्भकुम्भाम्भोरुहादीनां द्वितीयादिक्षणेषु 'स एवायं' 'स एवायमि'त्याद्युल्लेखेन ये संस्कारा ज्ञानसन्ताना उत्पद्यन्ते ते विचारगोचरगता क्षणिकाः, यत् प्रमाणयन्ति–

'सर्वं सत् क्षणिकम्, अक्षणिके क्रमयो(यौ)गपद्याभ्यामर्थक्रियाविरोधादिति वादस्थलसम्भूतम्।'

क्षणिकत्वा[A]वै[B]शेषिकं विशेषोपपत्तिश्च समग्रं तावत्–

---

† अयमात्मीयः प. । * °विवर्त° प. ज. । A °त्व° प. । B °विशेष° ज.

औत्पत्तिकं पदार्थकदम्बकं घटादिकं मुद्गरादिसामग्रीसाकल्ये विनश्वरमाकलय्यते, तत्र योऽस्य प्रान्त्यावस्थायां विनाशस्वभावः पदार्थसार्थोत्पत्तिसमये विद्यते स स्वभावो नोऽथवा ? विद्यते चेदापतितं तदुत्पत्तिसमयानन्तरमेव विनश्वरत्वम् । अथेदृश एव भावो यत् कियन्तमपि कालं स्थित्वा विनष्टव्यम्, एवं चेन्मुद्गरादिसन्निधानेप्येष एव तस्य स्वभाव इति भूयोऽपि तावत्कालं स्थेयम्, एवं च मुद्गरादिघातशतपातेऽपि न विनाशः, जातं कल्पान्तस्थायित्वं घटस्य, तथा च जगद्व्यवहारव्यवस्थालोपपातकपङ्किलता, इत्यभ्युपेयमनिच्छुनापि क्षणक्षयित्वं पदार्थानाम् । प्रयोगस्त्वेवं यद्विनश्वरं तदुत्पत्तिसमयेऽपि तत्स्वरूपम्, यथान्त्यक्षणवर्त्तिघटस्य स्वरूपं, विनश्वरस्वभावं च रूपरसादिकमुदयत आरभ्येति स्वभावहेतुः । ननु यदि क्षणक्षयिणो भावाः कथं तर्हि 'स एवायमि'ति वासनाज्ञानम् ? उच्यते, निरन्तरसदृशापरापरक्षणनिरीक्षणचैतन्योदयादविद्यानुबन्धाच्च पूर्वक्षणप्रलयकाल एव दीपकलिकायामिव सैवेयं दीपकलिकेति संस्कारमुत्पाद्य तत्सदृशमपरं क्षणान्तरमुदयते, तेन समानाकारज्ञानपरम्परापरिचयविरचितपरिणामान्निरन्तरोदयाच्च पूर्वक्षणानामत्यन्तोच्छेदेऽपि स एवायमित्यध्यवसायः प्रसभं प्रादुर्भवति, दृश्यते च लूनपुनरुत्पन्नेषु

A पदार्थोत्प॰ ज. पु. । B ॰समनन्त॰ पु. ज । C स्वभावो घ. । D ॰टस्येति, ज. । E ॰यच्चिरतरपरि॰ ज. ।

नखकेशकलापादिपु स एवायमिति प्रतीतिः, तथेहापि किं न सम्भाव्यते सुजनेन ? तस्मात् सिद्धसाधनमिदं यत् सत् तत् क्षणिकमिति युक्तियुक्तं च 'क्षणिकाः सर्वसंस्कारा इत्येवं वासने'ति। प्रस्तुतार्थमाह–एवं या वासना स **मार्गो** नामार्यसत्यम् **'इह'** बौद्धमते **'विज्ञेयः'** अवगन्तव्यः। तुशब्दः पाश्चात्यार्थसङ्ग्रहपूर्वं समुच्चयार्थे। चतुर्थमार्यसत्यमाह–**'निरोधः'**, किमित्याशंकायां मोक्ष उच्यते, **'मोक्ष'** अपवर्गः, सर्वक्षणिकत्व–सर्वनैरात्म्यवासनारूपो निरोधो नामार्यसत्यमभिधीयत इत्यर्थः ॥७॥

अथ तत्त्वानि व्याख्याय तत्संलग्नान्येवायतनान्याह—

**पञ्चेन्द्रियाणि शब्दाद्या, विषयाः पञ्च मानसम् ।**
**धर्मायतनमेतानि, द्वादशायतनानि च ॥८॥**

**व्याख्या—पञ्चसङ्ख्यानीन्द्रियाणि** स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि, **शब्दाद्या विषयाः पञ्च**–शब्दरूपरसस्पर्शगन्धरूपाः पञ्चविषया इन्द्रियव्यापारा इत्यर्थः, **'मानसं'** चित्तं, **'धर्मायतनम्'** इति–धर्म[१२]प्रधानमायतनं चैत्यस्थानमिति धर्मायतनम्, एतानि द्वादशसङ्ख्यानि ज्ञाता(तव्या)नि। न केवलमेतानि द्वादशायतनानि, (अपि) च–जाति१-जरा२-मरण३-भव४-उपादान५-तृष्णा६-वेदना७-

१२ "धर्माः सुखदुःखादयस्तेषामायतनं गृहं शरीरमित्यर्थः।" इति श्रीबृहद्वृत्तौ गुणरत्नसूरयः। (पृ. १३/१ आ.स मु.)

स्पर्श८-षडायतननामरूप९-विज्ञान१०-संस्कार११-अविद्या-१२ रू-पाणि * [13]द्वादशायतनानि, चः समुच्चये । अमी सर्वेऽपि संस्काराः क्षणिकाः, शेषं तदेवेति ॥८॥

तत्त्वानि व्याख्यायाधुना प्रमाणमाह—

**प्रमाणे द्वे च विज्ञेये, तथा सौगतदर्शने ।**
**प्रत्यक्षमनुमानं च, सम्यग्ज्ञानं द्विधा यतः ॥ ९ ॥**

व्याख्या—'तथा'इति [2]प्रस्तुतानुसन्धाने, 'सौगतदर्शने' बौद्धमते द्वे प्रमाणे विज्ञेये, 'चः'[3] पुनरर्थे, तदेवाह–प्रत्यक्षमनुमानं च, अक्षमक्षं [4]प्रति गतं प्रत्यक्षमैन्द्रियकमित्यर्थः, अनुमीयत

* °णि च द्वाद° प।

१३ बौद्धमत प्रमाणे संसार एटले एक अनादि अनन्त नि स्वभाव धाराप्रवाह. बुद्धदेव एक स्थळे कहे छे—" अज्ञानमांथी संस्कार जन्मे, संस्कारमांथी विज्ञान, विज्ञानमांथी नाम अथवा भौतिक देह, नाम अथवा भौतिक देहमांथी षडायतन, षडायतनमांथी इन्द्रियो अथवा विषयो, अने विषयो अथवा इन्द्रियस्पर्शमांथी वेदना उपजे वेदनामांथी तृष्णा, तृष्णामांथी उपादान, उपादानमांथी भव, भवमांथी जन्म, जन्ममांथी वार्धक्य मरण, दुःख अनुशोचना, यातना, उद्वेग अने नैराश्य विगेरे जन्मे, दुःख तथा यंत्रणानी घटमाळ एज रीते फरती रहे." (जुओ जिनवाणी, पृ. १४) आ उपरथी सूचित द्वादश आयतनोनो ख्याल पाचकोने सहेलाइथी आवी जशे.

१ °त्यक्षम° प । २ 'स्तुताभिसन्धा° जं । ३ चशब्दः पुन° प । ४ प्रति प्रत्य° जं. पु ।

इत्यनुमानं लैङ्गिकमित्यर्थः। यतः 'सम्यग्ज्ञानं' निश्चितावबोधः 'द्विधा' द्विप्रकारः प्रत्यक्षानुमानाभ्यामेवेत्यर्थः॥९॥

पृथक् पृथग् दर्शनापेक्षलक्षणसाङ्कर्यभीरुः कीदृक् प्रत्यक्षमत्र ग्राह्यमित्याशंकायामाह—

प्रत्यक्षं कल्पनाऽपोढम-भ्रान्तं तत्र बुध्यताम्।
त्रिरूपाल्लिङ्गतो लिङ्गि-ज्ञानं त्वनुमानसंज्ञितम्॥१०॥

व्याख्या—'तत्र' प्रमाणोभय्यां, प्रत्यक्षं 'बुध्यतां' ज्ञायतां शिष्येणेति, किम्भूतं? 'कल्पनापोढं,' शब्दसंसर्गवती प्रतीतिः कल्पना, तया 'अपोढं' रहितं निर्विकल्पकमित्यर्थः, अन्यच्च-'अभ्रान्तं' भ्रान्तिरहितं, रगरगायमाणपरमाणुलक्षण-स्वलक्षणं हि प्रत्यक्षं निर्विकल्पकमभ्रान्तं च तत्। घटपटादिबाह्यस्थूलपदार्थप्रतिबद्धं च ज्ञानं सविकल्पकं, तच्च बाह्यस्थूलार्थानां तत्तन्मतानुमानतोपपत्तिभिर्निराकरिष्यमाणत्वात् नीलाकारपरमाणुस्वरूपस्ये-(स्यै)व तात्त्विकत्वात्। ननु यदि बाह्यार्था न सन्ति किंविषयस्तर्ह्ययं घटकटशकटादिस्थूलप्रतिभास इति चेन्निरालम्बन एवायमनादिवितथवासनाप्रवर्तितो व्यवहाराभासो निर्विषयत्वादाकाशकेशवत् स्वप्नज्ञानवद्वेति। यदुक्तम्—

१°लिप° ज २ घटशकटकटादि° घ।

[14]नान्योऽ[1]नुभाव्यो बुद्ध्यास्ति, तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात्, स्वयं सैव [2]प्रकाशते ॥ (९)
बाह्यो न विद्यते ह्यर्थो, यथा बालैर्विकल्प्यते ।
वासनालुठितं चित्त-मर्थाभासे प्रवर्त्तते ॥ (१०)

इति युक्तं निर्विकल्पकमभ्रान्तं च प्रत्यक्षमिति ।

अनुमानलक्षणमाह–'तु' पुनः, 'त्रिरूपात्' पक्षधर्मत्व–सपक्षसत्त्व–विपक्षव्यावृत्तिरूपात् 'लिङ्गतो' धूमादेरुपलक्षणाद्यल्लिङ्गिनो वैश्वानरादेर्ज्ञानं त'दनुमानसंज्ञितम'नुमानं प्रमाणमित्यर्थः । 'सूत्रे लक्षणं नान्वेषणीयमि'ति चरमपदस्य नवाक्षरत्वेऽपि न दोष इति ॥१०॥

रूपत्रयमेवाह—

रूपाणि पक्षधर्मत्वं, सपक्षे विद्यमानता ।
विपक्षे नास्तिताहेतो-रेवं त्रीणि विभाव्यताम् ॥११॥

व्याख्या—'हेतोः' अनुमानस्य त्रीणि रूपाणि विभाव्यतामिति सम्बन्धः । तत्र 'पक्षधर्मित्वमि'ति साध्यधर्मविशिष्टो

१ °नुभवो बु° पु । २ °काश्यते ॥ जं. पु ।

१४ स्याद्वादमञ्जरी, पृ. १३९ । एतत्पद्यं सर्वदर्शनसंग्रहेऽपि विलोक्यम् एवमेव (पृ. ६३२) । एतत्पद्यं धर्मकीर्तिकृत–प्रमाणविनिश्चय–प्रथमविभागे वर्तते इति स्याद्वादरत्नाकरप्रथमभागे (पृ. १५० पुना) ।

धर्मी पक्षः, यथा पर्वतोऽयं वह्निमान् धूमवत्त्वात्, अत्र पर्वतः पक्षः, तत्र धर्मत्वं वह्निमत्त्वं धूमवत्त्वेन व्याप्तम्, धूमोऽग्निं न व्यभिचरतीत्यर्थः। सपक्षे सत्त्वमिति यो यो धूमवान् स स वह्निमान् यथा महानसप्रदेशः, अत्र धूमवत्त्वेन हेतुना सपक्षे महानसे सत्त्वं वह्निमत्त्वमस्तीत्यर्थः। विपक्षे नास्तितेति यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा जलाशये, जलाशये हि वह्निमत्त्वं व्यावर्त्तमानं व्याप्यं धूमवत्त्वमादाय व्यावर्तते इति। एवं प्रकारेण हेतोस्त्रीणि रूपाणि ज्ञायतामित्यर्थः ॥११॥

उपसंहरन्नाह—

**बौद्धराद्धान्तवाच्यस्य, संक्षेपोऽयं निवेदितः।**

व्याख्या—अयं संक्षेपो 'निवेदितः' कथितो निष्ठां नीत[१५] इत्यर्थ, कस्य? 'बौद्धराद्धान्तवाच्यस्य,' बौद्धानां राद्धान्तः–सिद्धान्तस्तत्र वाच्योऽभिधातव्योऽर्थस्तस्य।

**नैयायिकमतस्येतः, कथ्यमानो निशम्यताम् ॥१२॥**

'इतः' अनन्तरं नैयायिकमतस्य–शैवशासनस्य 'कथ्यमानो निशम्यतां' संक्षेपः कथ्यमान श्रूयतामित्यर्थः ॥१२॥

---

१५ अत्र विशेषोऽभिधीयते कश्चित्तर्करहस्यदीपिकावृत्तितः, तच्चैवं— " बुद्धाः सुगतास्ते च सप्त भवन्ति–१ विपश्यी, २ शिखी, ३ विश्वभूः,

४ क्रकुच्छन्दः, ५ काञ्चनः ६ काश्यपः, ७ शाक्यसिंहश्चेति, तेषामिदं दर्शनं बौद्धम्। ( पृ. ९ )

"बौद्धानां लिङ्गवेषाचारादिस्वरूपं प्रदर्श्यते—चमरो मौण्ड्यं कृत्तिः कमण्डलुश्च लिङ्गम्, धातुरक्तमागुल्फं परिधानं वेषः, शौचक्रिया बह्वी।

"भिक्षायां पात्रे पतितं सर्वं शुद्धमिति मन्वाना मांसमपि भुञ्जते, मार्गे च जीवदयार्थं प्रमृजन्तो व्रजन्ति, ब्रह्मचर्यादिस्वकीयक्रियायां च भृशं दृढतमा भवन्तीत्यादिराचारः। धर्मबुद्धसङ्घरूपं रत्नत्रयम्, तारादेवी शासने विघ्ननाशिनी, विपश्यादयः सप्त बुद्धाः कण्ठे रेखात्रयाङ्किताः सर्वज्ञा देवाः, बुद्धस्तु सुगतो धर्मधातुरित्यादीनि तन्नामानि, तेषां प्रासादा वर्तुला बुद्धांडकसंज्ञाः, भिक्षुसौगतशाक्यशौद्धोदनिसुगततथागतशून्यवादिनामानो बौद्धाः, तेषां शौद्धोदनिधर्मोत्तरार्चटधर्मकीर्तिप्रज्ञाकरदिग्नागप्रमुखा ग्रन्थकारा गुरवः। ( पृ. १०–१ )

" तत्र प्रमाणादभिन्नमर्थाधिगम एव प्रमाणस्य फलम्, तर्कप्रत्यभिज्ञयोरप्रामाण्यं, परस्परविनिर्लुठितक्षणक्षयिपरमाणुलक्षणानि स्वलक्षणानि, प्रमाणगोचरस्तात्त्विकः, वासनारूपं कर्म, सुखदुःखे धर्माधर्मात्मके पर्याया एव सन्ति, न द्रव्यम्, वस्तुनि केवलं स्वसत्त्वमेव, न पुनः परासत्त्वमिति सामान्येन बौद्धमतम्। अथवा वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदाच्चतुर्धा बौद्धा भवन्ति। तत्रार्यसमितीयापरनामकवैभाषिकमतमदः—चतुःक्षणिकं वस्तु जातिर्जनयति, स्थितिः स्थापयति, जरा जर्जरयति, विनाशो विनाशयति, तथा-

ऽस्मापि, तथाविध एव पुद्गलश्चासावभिधीयते, निराकारो बोधोऽर्थसहभाव्येव सामग्र्यधीनस्तत्रार्थे प्रमाणमिति ।

"सौत्रान्तिकमतं पुनरिदम्—रूपवेदनाविज्ञानसंज्ञासंस्काराः सर्वशरीरिणामे पञ्च स्कन्धा विद्यन्ते, न पुनरात्मा, ते एव हि परलोकगामिनः, तथा च तत्सिद्धान्तः—पञ्चेमानि भिक्षवः संज्ञामात्रं प्रतिज्ञामात्रं संवृतिमात्रं व्यवहारमात्रम् कतमानि पञ्च ? अतीतोऽद्धा, अनागतोऽद्धा, सहेतुको विनाशः, आकाशं पुद्गल इति, अत्र पुद्गलशब्देन परपरिकल्पितो नित्यत्वव्यापकत्वादिधर्मैव आत्मेति, बाह्योऽर्थो नित्यमप्रत्यक्ष एव, ज्ञानाकारान्यथानुप(प)त्त्या तु सन्नव गम्यते, साकारो बोधः प्रमाणम्, तथा क्षणिकाः सर्वसंस्काराः स्वलक्षण परमार्थः, यदाहुस्तद्वादिनः—प्रतिक्षणं विशरारवो रूपरसगन्धस्पर्शपरमाणवे ज्ञानं चेत्येव तत्त्वमिति, अन्यापोहः शब्दार्थः, तदुत्पत्तितदाकारताभ्यामर्थ-परिच्छेदः, नैरात्म्यभावनातो ज्ञानसंतानच्छेदो मोक्ष इति ।

" योगाचारमतं त्विदम्—विज्ञानमात्रमिदं भुवनम्, नास्ति बाह्योऽर्थः, ज्ञानाद्वैतस्यैव तात्त्विकत्वात्, अनेके ज्ञानसंतानाः, साकारो बोधः प्रमाणम्, वासनापरिपाकतो नीलपीतादिप्रतिभासाः, आलयविज्ञानं हि सर्ववासना-धारभूतम्, आलयविज्ञानविशुद्धिरेवापवर्ग इति ।

" माध्यमिकदर्शने तु—शून्यमिदं, स्वप्नोपमः प्रमाणप्रमेययोः प्रवि-भागः, मुक्तिस्तु शून्यतादृष्टेः, तदर्थं शेषभावनेति, केचित्तु माध्यमिकाः स्वस्थं ज्ञानमाहुः । तदुक्तम्—

"अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते,

प्रत्यक्षो न हि बाह्यवस्तुविस्त(स)रः सौत्रान्तिकैराश्रितः ।

योगाचारमतानुगैरभिमता साकारबुद्धिः परा,

मन्यन्ते बत मध्यमाः कृतधियः * स्वस्थां परां संविदम् ॥१॥" इति ।

" ज्ञानपारमिताद्या दश ग्रन्थाः, तर्कभाषा हेतुबिन्दुस्तट्टीकार्चटतर्कनाम्नी प्रमाणवार्तिकं तत्त्वसंग्रहः न्यायबिन्दुः +कमलशीलो न्यायप्रवेशकश्चेत्यादयस्तद्ग्रन्था इति ।" ( पृ. १९ )

श्रीमन्माध्वाचार्यविरचिते सर्वदर्शनसंग्रहे चैवं प्रतिपादितम्–" ते च बौद्धा माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा यथाक्रमं सर्वशून्यत्वबाह्यशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते ।(पृ. १६)

तत्रालयविज्ञानं नामाहमास्पदं विज्ञानं नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम्, यथोक्तम्–"तत्स्यादालयविज्ञानं, यद्भवेदहमास्पदम् । तत्स्यात्प्रवृत्तिविज्ञानं, यन्नीलादिकमुल्लिखेत्॥" इति । तस्मादालयविज्ञानसन्तानातिरिक्तः कादाचित्कः प्रवृत्तिविज्ञानहेतुर्बाह्योऽर्थो ग्राह्य एव । ( पृ. ३८ ) कादाचित्कप्रत्ययश्चतुरः प्रत्ययान्प्रतीत्योपपद्यते, "ते चत्वारः प्रत्ययाः प्रसिद्धा—आलम्बनसमनन्तरसहकार्यधिपतिरूपाः।" ( पृ. ३९ )

* ' स्वच्छा 'मितिश्रीमद्राजशेखरीयषड्दर्शनसमुच्चये पाठो मुद्रितः। (पृ. १४)

\+ अयं च ग्रन्थकाराभिधानः, स च तत्त्वसंग्रहस्य कर्ता, एतत्सम्प्रदायं राजशेखरीयषड्दर्शनसमुच्चये "कमलशील" इति प्रोक्तम् ।

तदाह—

अक्षपादमते देवः, सृष्टिसंहारकृच्छिवः।
विभुर्नित्यैकसर्वज्ञो, नित्यबुद्धिसमाश्रितः ॥१३॥

तथा चैतेषां मते 'प्रत्ययोपनिबन्धनहेतूपनिबन्धनरूपो द्विविधः समुत्पादः' कथ्यते। स च प्रत्येकं बाह्य आध्यात्मिकश्च, बाह्यो यथा—"पृथिवीधातुरङ्कुरस्य काठिन्यं गन्धश्च जनयति, अब्धातुः स्नेहं रसश्च जनयति, तेजोधातू रूपमौष्ण्यञ्च, वायुधातुः स्पर्शनं चलनञ्च, आकाशधातुरवकाशं शब्दञ्च, ऋतुधातुर्यथायोगं पृथिव्यादिकमि"त्यादिकम्। आध्यात्मिकश्च यथा—'अविद्या जातिं जनयति, जातिर्जरामरणादीन्' इति। न च कुत्राऽपि चेतनाधिष्ठानमस्तीत्यादिकम्। बौद्धनये द्वादशायतनपूजा श्रेयस्करीति प्रसिद्धम्—"अर्थानुपार्ज्य बहुशो, द्वादशायतनानि वै। परितः पूजनीयानि, किमन्यैरिह पूजितैः ॥१॥ ज्ञानेन्द्रियाणि पञ्चैव, तथा कर्मेन्द्रियाणि च। मनो बुद्धिरिति प्रोक्तं, द्वादशायतनं बुधैः ॥२॥" इति। (पृ. ४५)

तथा च श्रीराजशेखरीयषड्दर्शनसमुच्चये—"मृद्वी शय्या प्रातरुत्थाय पेया, भक्तं मध्ये पानकं चापराह्णे। द्राक्षाखण्डं शर्करा चार्धरात्रे, मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥१॥ मणुन्नं भोयणं भुच्चा, मणुन्नं सयणासणं। मणुन्नंमि अगारंमि, मणुन्नं झायए मुणी ॥२॥" इति बौद्धसिद्धान्तः।

१°माश्रयः॥ जं. पु।

व्याख्या— 'अक्षपादाः' नैयायिकास्तेषां मते शासने देवो दर्शनाधिप्रायकः शिवो महेश्वरः; स कथम्भूतः? 'सृष्टिसंहारकृत्', सृष्टिः–प्राणिनामुत्पत्तिः, संहारः–तद्विनाशः, सृष्टिश्च संहारश्चेति द्वन्द्वस्तौ करोतीति [1]क्विपि तोन्तः, तथाहि–अस्य प्रत्यक्षोपलक्ष(क्ष्य)माणचराचरस्वरूपस्य जगतः कश्चिदनिर्वचनीयमाहात्म्यः पुरुषः स्रष्टा ज्ञेयः। केवलसृष्टौ च निरन्तरोत्पद्यमानापारप्राणिगणस्य भुवनत्रयेप्यमातत्त्वमिति संहारकर्त्तापि कश्चिदभ्युपगन्तव्यः। यत्प्रमाणं[2] – 'सर्वं धरणिधरणीधरतरुपुरप्राकारादिकं बुद्धिमत्पूर्वकं, कार्यत्वात्, यद्यत् कार्यं [3]तत्तद्बुद्धिमत्पूर्वकं दृष्टं, यथा घटः, कार्यं चेदं तस्माद्बुद्धिमत्पूर्वकमिति प्रयोगः,' स च भगवानीश्वर एवेत्यन्वयः, व्यतिरेके गगनम्। न चायमसिद्धो हेतुः, भूभूधराणां स्वकारणकलापजन्यत्वेनावयवितया वा कार्यत्वस्य जगत्प्रसिद्धत्वात्। नापि विरुद्धानैकान्तिकदोषौ, विपक्षादत्यन्तं व्यावृत्तत्वात्। नापि कालात्ययापदिष्टः, प्रत्यक्षानुमानोपमानागमाबाध्यमानधर्मधर्मित्वात्। नापि प्रकरणसमः, तत्प्रतिपन्थिपदार्थस्वरूपसमर्थनप्रथितप्रत्यनुमानोदयाभावात्। अथ 'निर्वृत्तात्मवदशरीरत्वादेव न सम्भवति सृष्टिसंहारकर्त्तेश्वर' इति प्रत्यनुमानोदयात् कथं[4] प्रकरणसमदूषणाभाव इति चेद्? उच्यते–[5]'अत्र सा-

१ क्विप् तोन्तः, जं. पु.। २ °णं धर° घ.। ३ तत्तत् सर्वं बुद्धि° घ.। ४ °रादीनां घ.। ५ °थं न प्रकरणसमः? इति चेद् घ। ६ तत्र घ.।

स्यमान ईश्वररूपो धर्मी प्रतीतोऽप्रतीतो वानुमन्यते सुहृदा? अप्रतीतश्चेद्वस्तुत्वरिकल्पितहेतोरेवाश्रयासिद्धिदोषप्रसङ्गः, प्रतीतश्चेत् तर्हि येनैव प्रमाणेन तेनैव स्वयमुद्भावितस्तन्वतनुरपि किमर्थं नाभ्युपगम्यत इति कथमशरीरत्वम्? अतो न दुष्टो हेतुरिति साधूक्तं 'सुप्रसद्वारकृच्छिवः'। तथा विभुः सर्वव्यापकः, एकनियतस्थानवर्तित्वे ह्यनियतप्रदेशप्रतिष्ठितानां पदार्थानां प्रतिनियतयथावन्निर्माणानुपपत्तेः। नह्येकस्थानस्थितः कुम्भकारोऽपि दूरदूरतरघटघटनाय[1] व्याप्रियते, [3]तस्माद्विभुर्भगवान्। तथा 'नित्यकः' नित्यश्चासावेकश्चेति, यतो नित्योऽत एवैकः। अप्रच्युतानुत्पन्नस्थिरैकरूपं[4] नित्यम्। भगवतो ह्यनित्यत्वे पराधीनोत्पत्तिसव्यपेक्षया कृतकत्वप्राप्तिः। स्वोत्पत्तावपेक्षितपरव्यापारो हि भावः कृतक इष्यते। अथ चेत् कश्चिज्जगत्कर्तारमपरमभिदधाति स एवानुयुज्यते-सोऽपि नित्योऽनित्यो वा? नित्यश्चेदधिकृतेश्वरेण किमपराद्धम्? अनित्यश्चेत् तस्याप्यन्येनोत्पादकान्तरेण भाव्यमनित्यत्वादेव, [१६]तस्याप्यन्येनेति नित्यानित्यवादविकल्पशिल्पशतस्वीकारे कल्पान्तेऽपि न जल्पपरिसमाप्तिः, तस्मान्नित्य एव भगवान्। अन्यच

१ दूरतो घटघ° ध। २ °र्थं प। ३ यस्मात् भगवान् विभुः। जं। ४ °पं हि नि-ध।

१६ स्याद्वादमञ्जर्यां श्रीमन्मल्लिषेणसूरयः-"अनित्यश्चेत्तस्याप्युत्पादकान्तरेण भाव्यम्, तस्याऽपि नित्यानित्यत्वकल्पनायामनवस्थादौस्थ्यमिति।" (पृ. २६ पुना.)

एकोऽद्वितीयो, [17]बहूनां हि जगत्कर्तृत्वस्वीकारे परस्परं पृथक् पृथगन्यान्य(वि)सदृशमतिव्यापारतयैकैकपदार्थस्य विसदृश-निर्माणे सर्वमसमञ्जसमापद्येतेति भगवानेक एवेति युक्तियुक्तं 'नित्यैक' इति विशेषणम्। तथा 'सर्वज्ञ' इति, सर्वपदार्थानां सर्वविशेषज्ञाता। सर्वज्ञत्वाभावे हि विधित्सितपदार्थोपयोग्यजगत्प्रसमरविप्रकीर्णपरमाणुकणप्रचयसम्यक्सामग्रीमीलनाऽक्षमतया याथातथ्येन पदार्थनिर्माणरचना दुर्घटा। सर्वज्ञश्च सन् सकलप्राणिनां सम्मीलितसमुचितकारणकलापानुरूपपारिमाण्डल्यानुसारेण कार्यं वस्तु निर्मिमाणः स्वार्जितपुण्यपापानुमानेन च स्वर्गनरकयोः सुखदुःखोपभोगं ददानः केषां नाभिमतः? तथा च तद्यूथ्याः—

[18]ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव वा।
अन्यो जन्तुरनीशोऽय-मात्मनः सुखदुःखयोः॥ (११) इति॥

---

१७ श्री स्याद्वादमञ्जरीकार.-'बहूनां हि विश्वविधातृत्वस्वीकारे परस्पर-विमतिसंभावनाया अनिवार्यत्वादेकस्य वस्तुनोऽन्यान्यरूपतया निर्माणे सर्वं म)-समञ्जसमापद्येतेति।" (पृ २५) तर्करहस्यदीपिकावृत्तावेवं पाठः-'बहूनां हि जगत्कर्तृत्वस्वीकारे परस्पर पृथक्पृथगन्यान्यविसदृशमतिव्यापृतत्वेनैकैकपदार्थस्य विसदृशनिर्माणे सर्वमसमञ्जसमापद्येतेति।" (पृ २१)

१८ दृश्यत इद पद्यमेवमेव स्याद्वादमञ्जर्यां पृ.२५ स्याद्वादरत्नाकरे त्वेवम्-"स्मृतिरपि-"अज्ञो जन्तुरनीशोऽय-मात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्,स्वर्गं वा श्वभ्रमेव वा॥" इति।" (पृ ४११, पुना) १ यक्षो पु।

क्ष्यमाण ईश्वररूपो धर्मी प्रतीतोऽप्रतीतो वाऽनुमन्यते सुहृदा? अप्रतीतश्चेद्भवत्परिकल्पितहेतोरेवाश्रयासिद्धिदोषप्रसङ्गः, प्रतीतश्चेत् तर्हि येनैव प्रमाणेन तेनैव सपक्षुद्भावितस्तनुरपि किमर्थं नाभ्युपगम्यत इति कथमशरीरत्वम्? अतो न दुष्टो हेतुरिति साधूक्तं 'सृष्टिसंहारकृच्छिवः'। तथा विभुः सर्वव्यापकः, एकनियतस्थानवर्त्तित्वे ह्यनियतप्रदेशप्रतिष्ठितानां पदार्थानां प्रतिनियतयथावन्निर्माणानुपपत्तेः। नह्येकस्थानस्थितः कुम्भकारोऽपि [1]दूरदूरतरघटघटनाय[2] व्याप्रियते, [3]तस्माद्विभुर्भगवान्। तथा 'नित्यैकः' नित्यश्चासावेकश्चेति, यतो नित्योऽत एवैकः। अप्रच्युतानुत्पन्नस्थिरैकरूपं[4] नित्यम्। भगवतो ह्यनित्यत्वे पराधीनोत्पत्तिसव्यपेक्षया कृतकत्वप्राप्तिः। स्वोत्पत्तावपेक्षितपरव्यापारो हि भावः कृतक इष्यते। अथ चेत् कश्चिज्जगत्कर्तारमपरमभिदधाति स एवानुयुज्यते-सोऽपि नित्योऽनित्यो वा? नित्यश्चेदधिकृतेश्वरेण किमपराद्धम्? अनित्यश्चेत् तस्याप्यन्येनोत्पादकान्तरेण भाव्यमनित्यत्वादेव, [16]तस्याप्यन्येनेति नित्यानित्यवादविकल्पशिल्पशतस्वीकारे कल्पान्तेऽपि न जल्पपरिसमाप्तिः, तस्मान्नित्य एव भगवान्। अन्यच्च

१ दूरतो घटघ° ध। २ °र्थां ° ध। ३ यस्मात् भगवान् विभुः। ज्ञं। ४ °पं हि नि°-ध।

१६ स्याद्वादमञ्जर्यां श्रीमन्मल्लिषेणसूरयः-"अनित्यश्चेत्तस्याप्युत्पादकान्तरेण भाव्यम्, तस्याऽपि नित्यानित्यत्वकल्पनायामनवस्थादौःस्थ्यमिति।" (पृ. २६ मुना.)

एकोऽद्वितीयो, [१७]बहूनां हि जगत्कर्तृत्वस्वीकारे परस्परं पृथक् पृथगन्यान्य(वि)सदृशमतिव्यापारतयैकैकपदार्थस्य विसदृश-निर्माणे सर्वमसमञ्जसमापद्येतेति भगवानेक एवेति युक्तियुक्तं 'नित्यैक' इति विशेषणम् । तथा 'सर्वज्ञ' इति, सर्वपदार्थानां सर्वविशेषज्ञाता । सर्वज्ञत्वाभावे हि विधित्सितपदार्थोपयोग्यजगत्प्रसरविप्रकीर्णपरमाणुकणप्रचयसम्यक्सामग्रीमीलनाऽक्षमतया याथातथ्येन पदार्थनिर्माणरचना दुर्घटा। सर्वज्ञश्च सन् सकलप्राणिनां सम्मीलितसमुचितकारणकलापानुरूपपारिमाण्डल्यानुसारेण कार्यं वस्तु निर्मिमाणः स्वार्जितपुण्यपापानुमानेन च स्वर्गनरकयोः सुखदुःखोपभोगं ददानः केषां नाभिमतः ? तथा च तदूक्याः—

[१८]ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव वा ।
अन्यो जन्तुरनीशोऽय-मात्मनः सुखदुःखयोः ॥ (११) इति ॥

---

१७ श्री स्याद्वादमञ्जरीकारः-'बहूनां हि विश्वविधातृत्वस्वीकारे परस्परविमतिसंभावनाया अनिवार्यत्वादेकैकस्य वस्तुनोऽन्यान्यरूपतया निर्माणे सर्वम(म)-समञ्जसमापद्येतेति ।" (पृ २५) तर्करहस्यदीपिकावृत्तावेवं पाठः-'बहूनां हि जगत्कर्तृत्वस्वीकारे परस्पर पृथक्पृथगन्यान्यविसदृशमतिव्यापृतत्वेनैकैकपदार्थस्य विसदृशनिर्माणे सर्वमसमञ्जसमापद्येतेति ।" (पृ २१)

१८ इत्यत इदं पद्यमेवमेव स्याद्वादमञ्जर्यां पृ.२५ स्याद्वादरत्नाकरे त्वेवम्-"स्मृतिरपि- "अज्ञो जन्तुरनीशोऽय-मात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव वा ॥" इति ।" (पृ. ४११, पुना) १ अज्ञो पु।

भूयोऽपि [1]विशेषयन्नाह — 'नित्यबुद्धिसमाश्रित' इति शाश्वतबुद्धिस्थानं, क्षणिकबुद्धिमतो हि पराधीनकार्यापेक्षितया मुख्यकर्तृत्वाभावादनीश्वरत्वप्रसक्तिरिति। ईदृग्गुणविशिष्टः शिवो नैयायिकमतेऽभ्युपगन्तव्यः ॥१३॥

अथ तत्त्वानि प्ररूपयन्नाह—

तत्त्वानि षोडशामुत्र, प्रमाणादीनि तद्यथा।
प्रमाणं च१ प्रमेयं च२, संशयश्च३ प्रयोजनम् ४ ॥१४॥
दृष्टान्तोऽप्यथ५ [2]सिद्धान्तो६ऽ-व[3]यवा७स्तर्क८ निर्णयो९।
वादो१० जल्पो११ वितण्डा च १२, हेत्वाभासा १३-
श्छलानि च १४ ॥ १५ ॥
जातयो१५ निग्रहस्थाना१६—न्येषामेवं प्ररूपणा।
अर्थोपलब्धिहेतुः स्यात्, प्रमाणं तच्चतुर्विधम् ॥१६॥
त्रिभिर्विशेषकम् ॥

व्याख्या—'अमुत्र' अस्मिन् प्रस्तुते नैयायिकमते षोडश-तत्त्वानि 'प्रमाणादीनि' प्रमाणप्रभृतीनि 'तद्यथा' इति

१ विशिष्टयन्नाह ज.। विशिषन्नाह पु.। २ °न्तोऽथ सिद्धान्तो-ऽवयवतर्कविनिर्णयाः। पु.। ३ °यवस्त° जं.।

बालाववोधाय नामान्यप्याह—"[१]प्रमाण १ प्रमेय २ संशय ३ प्रयोजन ४ दृष्टान्त ५ सिद्धान्ताऽ-६ वयव ७ तर्क ८ [१]निर्णय ९ वाद १० जल्प ११ वितण्डा १२ हेत्वाभास १३ छल १४ जाति १५ निग्रहस्थानानां १६ तत्त्वानां ज्ञानान्निःश्रेयस सिद्धिरिति षोडश। 'एषामेवं प्ररूपणे'ति तत्त्वानामेवमनुना प्रकारेण प्ररूपणा नाममात्रप्रकटनमित्यर्थः। अर्थैकैकस्य स्वरूपमाह—तत्रादौ प्रमाणस्वरूपं प्रकटयन्नाह—'अर्थोपलब्धिहेतुः प्रमाणं स्यात्' अर्थस्य पदार्थस्योपलब्धिः ज्ञानं तस्य हेतुः कारणं प्रमाणं स्यात् भवेत्। परापरदर्शनापेक्षया प्रमाणानामनियतत्वात् सन्दिहानस्य संख्याऽपदिशन्नाह—'तच्चतुर्विधम्' इति, तत् प्रमाणं चतुर्भेदं ज्ञेयमिति ॥ १४–१५–१६ ॥

प्रत्यक्षमनुमानं[२] च, शाब्दमुपमया सह।

व्याख्या—प्रमाणनामानि निगदसिद्धान्येव केवलमुपमया सहेत्युपमानं प्रमाणम्। अथ प्रत्यक्षानुमानस्वरूपमाह—

[३]तत्रेन्द्रियार्थसम्पर्को—त्पन्नमव्यभिचारकम् ॥१७॥

---

१९ पश्यत स्याद्वादमञ्जरी पृ ६९तम इदं गौतमसूत्रम् १-१-१।

१ 'विनिर्णय' पु.। २ °नं चोपमानं शाब्दिकं तथा। प। मूलस्य-पाठस्तु 'प'प्रतौ प्रत्यन्तरत्वेनादतोऽस्ति। ३ तत्रेन्द्रियार्थसन्निकर्षोत्पन्न° जं. पु.।

व्यवसायात्मकं ज्ञानं, व्यपदेशविवर्जितम् ।
प्रत्यक्षमितरन्मानं, तत्पूर्वं त्रिविधं भवेत् ॥१८॥

व्याख्या—'तत्र' प्रमाणचातुर्विध्ये प्रत्यक्षं कीदृग् ? इति सम्बन्धः। विशेषणान्याह–'इन्द्रियार्थसम्पर्कोत्पन्नम्' इति, इन्द्रियं च अर्थश्चेति द्वन्द्वः, तयोः सन्निकर्षात् संयोगादुत्पन्नं जातम्, इन्द्रियं हि नैकट्यात्पदार्थेन संयुज्यते, इन्द्रियार्थयोः संयोगाच्च ज्ञान-मुत्पद्यते, यदुक्तम्—

आत्मा सहैति मनसा मन इन्द्रियेण,
स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रः।
योगोऽयमेव मनसः किमगम्यमस्ति,
यस्मिन्मनो व्रजति तत्र गतोऽयमात्मा ॥ (१२)

तथा'ऽव्यभिचारकं' ज्ञानान्तरेण नान्यथाभावि, शुक्तिशकले कलधौतबोधो हीन्द्रियार्थसन्निकर्षोत्पन्नोऽपि व्यभिचारी दृष्टोऽतो-ऽव्यभिचारकं ग्राह्यम् । तथा'व्यवसायात्मकं' व्यवहारसाधकं, सज-(निर्ज)लधरणितले हि बहलशाड्वलहृसावल्यामिन्द्रियार्थसान्निध्यो-द्भवमपि जलज्ञानं तत्प्रदेशसद्गमेऽपि स्नानपानावगाहनादिव्यवहारा-

१ °क्षमनुमानं तु, तत् ५.। मूलस्थपाठः प्रत्यन्तरत्वेन 'घ' प्रत्यादर्शे विद्यते। °क्षमनुमानं च, तत् ज.। २ °सन्निकर्षोत्प° ज पु। ३ °र्थयोर्हि संयो° घ.। ४ °चारिकं घ.।

१० पद्यमिद श्रीतर्करहस्यदीपिकाकृतापि समवतारितम्। (पृ. २६)

साधकत्वादप्रमाणम्, अतः सफलं व्यवसायात्मकमिति विशेषणम्। तथा "व्यपदेशविवर्जितम्" इति, व्यपदेशः विपर्ययस्तेन रहितम्, तथा ह्याजन्मकाचकामलादिदोषदूषितचक्षुषः पुरुषस्य धवले शङ्खे पीतज्ञानमुदेति, तद्यद्यपि सकलकालं तन्नेत्रदोषाऽविरामादिन्द्रियार्थसन्निकर्षोत्पन्नमस्ति तथाप्यन्यवस्तुनोऽन्यथावबोधान्न तद्योक्तलक्षणं प्रत्यक्षम्[21]। इति प्रत्यक्षसाधकं विशेषणचतुष्टयमुक्त्वा साम्प्रतमनुमानमाह 'इतरन्मानम्' इति, इतरद् अन्यन्मानम् अनुमानमुपदिशति, 'तद्' अनुमानं 'पूर्वं' प्रथमं 'त्रिविधं' त्रिप्रकारं 'भवेत्' जायेत। पूर्वमितिपदेनानुमानान्तर्भेदानन्त्यमाह। 'तत्पूर्वं' प्रत्यक्षपूर्वं चेति श्लोकद्वयार्थः॥ १७–१८॥

अनुमानत्रैविध्यमेवाह—

**पूर्ववच्छेषवच्चैव, दृष्टं सामान्यतस्तथा।**
**तत्राद्यं कारणात् कार्य–मनुमानमिहोदितम्॥१९॥**

२१ तथा च गौतमसूत्रम्–"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति" (१–१–४)।

अत्र तर्करहस्यदीपिकाकृच्छ्रीमन्तो गुणरत्नसूरयः–"तत्रेति तेषु प्रमाणेषु प्रथमं प्रत्यक्षमुच्यते। अत्रास्येदमक्षपादप्रणीतं सूत्रम्–"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" (१–१–४) इति। इन्द्रियं चक्षुरादि मनःपर्यन्तं तस्यार्थः परिच्छेद्य इन्द्रियार्थः, इन्द्रियविषयभूतोऽर्थो रूपादिः, "स्पर्श-

व्याख्या—पूर्ववत् शेषवत् सामान्यतो दृष्टं चेत्यनुमानत्रयम्। 'चः' समुच्चये, 'एव' इति पूरणार्थे, 'तथा' इति उपप्रदर्शने। 'तत्र' त्रिषु मध्ये आद्यमनुमानम् 'इह' शास्त्रे 'कारणात् कार्यमुदितं' कारणाद् मेघात् कार्यं वृष्टिलक्षणं यतो ज्ञायते तत् कारणकार्यं नामानुमानं कथितमित्यर्थः ॥१९॥

निदर्शनेन तमेवार्थं दृढयन्नाह—

यथा--रोलम्बगवलव्याल—तमालमलिनत्विषः।
वृष्टिं व्यभिचरन्तीह, नैवम्प्रायाः पयोमुचः ॥२०॥

व्याख्या—'यथा' इति दृष्टान्तकथनारम्भे 'रोलम्बाः' भ्रमराः, 'गवलं' माहिषं शृङ्गम्, 'व्यालाः' गजाः सर्पा वा, 'तमालाः' वृक्षविशेषाः सर्वेऽप्यमी कृष्णपदार्थाः स्वभावतो ज्ञेयाः, द्वन्द्वः समासो बहुव्रीहिश्च। 'एवम्प्रायाः' एवंविधाः 'पयोमुचः' मेघा वृष्टिं न व्यभिचरन्ति। 'एवम्प्राया' इत्युपलक्षणेनापरेऽपि वृष्टिहेतवो-

---

दयस्तदर्थां" इति वचनात्, तेन सन्निकर्ष प्रत्यासत्तिरिन्द्रियस्य प्राप्त सम्बन्ध इति यावत्। स च षोढा। × × ×। अथ निकर्षग्रहणमेवास्तु 'सग्रहण व्यर्थं, न, 'सशब्दग्रहणस्य सन्निकर्षषट्कप्रतिपादनार्थत्वात्। × ××। ज्ञानसग्रह सुखादिनिवृत्त्यर्थं सुखादीनामज्ञानरूपत्वात्। × ×। अव्यपदेश्यं नामकल्पनारहितं, नामकल्पनायां हि शाब्दं स्यात्। अव्यपदेश्यपदग्रहणाभावे हि, व्यपदेशः—शब्दः, तेनेन्द्रियार्थसन्निकर्षेण चोभाभ्यां यदुत्पादित ज्ञान तदप्यध्यक्षफल स्यात्तन्निवृत्त्यर्थमव्यपदेशपदोपादानम्। × ×। इन्द्रियजन्यस्य मरुमरीचिकासूदकज्ञानस्य शुक्तिशकले कलधौतबोधादेश्च निवृत्त्यर्थमव्यभिचारिपदोपादानम्। यदतस्मिंस्तदुत्प-

ऽ[१]श्युन्नतत्वादिविशेषा ज्ञेयाः, यदुक्तम्—

> [२२]गम्भीरगर्जितारम्भ-निर्भिन्नगिरिगह्वराः ।
> रक्तत्तडिल्लतासङ्ग-पिशङ्गोत्तुङ्गविग्रहाः ॥ (१३)

इत्यादयोऽपि दृष्टि न व्यभिचरन्ति ॥ २० ॥

[२३]शेषवन्नामधेयं द्वितीयमनुमानभेदमाह —

## कार्यात् कारणानुमानं, यच्च तच्छेषवन्मतम् ।
## तथाविधनदीपुरा-न्मेघो वृष्टो यथोपरि ॥ २१ ॥

व्याख्या–यच्च 'कार्यात्' फलात् 'कारणानुमानं' फलोत्पत्तिहेतुपदार्थावगमनं तच्छेषवदनुमानं 'मतं' कथितं नैयायिकशासने, यथा तथाविधनदीपुरादुपरि मेघो वृष्टः तथाविध प्रबहत्सलिलसम्भारभरितो यो नदीपूरः–सरित्प्रवाहस्तस्मादुपरि

---

श्यते तद्व्यभिचारि ज्ञानम्, तद्व्यवच्छेदेन तस्मिंस्तदिति ज्ञानमव्यभिचारि । व्यवसीयतेऽनेनेति व्यवसायो विशेष उच्यते, विशेषजनितं व्यवसायात्मकं, अथवा व्यवसायात्मकं निश्चयात्मकम् । एतेन संशयज्ञानमनेकपदार्थालम्बनत्वादनिश्चयात्मकत्वाच्च प्रत्यक्षफलं न भवतीति ज्ञापितम् । × × । केचित्पुनरेव व्याचक्षते–अव्यपदेश्यं व्यवसायात्मकमिति पदद्वयेन निर्विकल्पकसविकल्पकभेदेन प्रत्यक्षस्य द्वैविध्यमाह, शेषाणि तु ज्ञानविशेषणानीति ।" (षड्दर्शनसमुच्चये बृहद्वृत्तौ मु. पृ. २२१ आत्मानन्दसभा )

'१. °श्युन्नत्यादि° जं. पु । २२. पश्यतेद प्रमाणमीमांसायाम् । (पृ. ६२ उ) । २३. "कार्यात्कारणानुमानभेदमाह" इति प्रत्यन्तरे ।

शिखरिशिखरोपरि जलधराभिवर्षणज्ञानं[1] तच्छेपवत्। अत्र कार्यं नदीपूरः, कारणं[2] च पर्वतोपरि मेघो वृष्ट इति। उक्तञ्च नैयायिकैः—

[२४]आवर्तवर्त्तनाशालि-विशालकलुषोदकः।
कल्लोलविकटास्फाल-स्फुटफेनछटाङ्कितः[3] ॥ (१४)
वहद्बहलशेवाल-फलशाड्वलसङ्कुलः।
नदीपूरविशेषोऽपि, शक्यते न[4] निवेदितुम् ॥ (१५)

इति ॥ २१ ॥

तृतीयानुमानमाह—

यच्च सामान्यतो दृष्टं, तदेवं गतिपूर्विका।
पुंसि देशान्तरप्राप्ति-र्यथा सूर्येऽपि सा तथा ॥ २२ ॥

व्याख्या—'चः' पुनरर्थे, यत् 'सामान्यतो दृष्टं' तत् 'एवम्' अमुना वक्ष्यमाणप्रकारेण, यथा—'पुंसि' पुरुषे देवदत्तादौ देशान्तरप्राप्तिर्गतिपूर्विका एकस्माद्देशाद्देशान्तरगमनं गमनपूर्वकमि-

१ जलदाभि° ध.। २. °णं पर्व° ध.।

२४. द्र इमे पद्ये प्रमाणमीमांसायां स्तः। (पृ. ६४, पुना) एते न्यायमञ्जर्यां पृ १३० तमे वर्त्तेते इति स्याद्वादरत्नाकरे (पृ. ५९७, पुना) तृतीयो विभागः।

३. °स्फे° इति स्याद्वादरत्नाकरे पृ. ५९७।

४. न च वेदि° पु. 'ते न वे०' इति स्याद्वादरत्नाकर पृ. ५९७ तमे प्रमाणमीमांसायां च पाठान्तरः। (पृ. ६४)।

सूर्यः, यथोज्जयिन्याः प्रस्थितो देवदत्तो माहिष्मतीपुरि प्राप्तः, [२५] 'सूर्येऽपि सा तथे'ति—यथा पुंसि तथा सूर्येऽपि सा गतिरभ्युपगम्यते। यद्यपि गगने सञ्चरतः सूर्यस्य नेत्रावलोकप्रसराभावेन गतिर्नोपलभ्यते तथाप्युदयाचलात् सायमस्ताचलचूलिकावलम्बन-(नं) गतिं सूचयति। एवं सामान्यतो दृष्टं नानुमानं ज्ञेयमित्यर्थः॥२२॥

अथ क्रमायातमपि शब्दप्रमाणं स्वल्पवक्तव्यत्वादुपेक्षा[१](क्ष्या)-दावुपमानलक्षणमाह—

**प्रसिद्धधर्मसाधर्म्या—दप्रसिद्धस्य साधनम्।**
**उपमानं तदाख्यातं, यथा गौर्गवयस्तथा॥ २३॥**

२५. अनेन सूर्यस्य गतिममन्वाना अद्यतनीयाः पाश्चात्यभौगोलिकातदनुसारिणः पौर्वात्या अपि निराकृता वेदितव्याः। अत्र तर्करहस्यदीपिकाकृतः—"अत्र देशान्तरप्राप्तिशब्देन देशान्तरदर्शनं ज्ञेयम्, अन्यथा देशान्तरप्राप्तेर्गतिकार्यत्वेन शेषवतोऽनुमानादस्य भेदो न स्यात्। यद्यपि गगने सञ्चरतः सूर्यस्य नेत्रावलोकप्रसराभावेन गतिर्नोपलभ्यते तथाप्युदयाचलात् कालान्तरेऽस्ताचलचूलिकादौ तद्दर्शनं गतिं गमयति। अथवा देशान्तरप्राप्तेर्गतिकार्यत्वं लोको न प्रत्येतीतीदमुदाहरणं कार्यकारणभावाविवक्षया चोपन्यस्तम्। प्रयोगस्त्वेवम्—सूर्यस्य देशान्तरप्राप्तिर्गतिपूर्विका देशान्तरप्राप्तित्वाद्देवदत्तदेशान्तरप्राप्तिवत्।" (पृ. २८)

१. °पेक्ष्योपमा° प.। २. °द्धवस्तुसाध° प.। ३. °नं समाख्यातं° प.।

व्याख्या–तदुपमानं प्रमाणम्, 'आख्यातं' कथितं, यत्तदो-
र्नित्याभिसम्बन्धात्, यत्किञ्चिद् 'प्रसिद्धस्य साधनम्' अज्ञाय-
मानस्यार्थस्य ज्ञापनं क्रियते, 'प्रसिद्धधर्मसाधर्म्यात्' इति प्रसिद्धः-
आबालगोपालाङ्गनाविदितो योऽसौ धर्मः–असाधारणं लक्षणं तस्य
साधर्म्यं–समानधर्मत्वं तत इति तदुपमानमाख्यातम्[२६]। दृष्टान्तमाह–
'यथा गौर्गवयस्तथा' इति, यथा कश्चिदरण्यवासी नागरिकेण
'कीदृग् गवयः?' इति पृष्टः स च परिचितगोगवयलक्षणो नाग-
रिकं प्राह–'यथा गौस्तथा गवयः,' खुरककुदलाङ्गूलसास्नादिमा-
न्यादृशो गौस्त्वया जन्मप्रसिद्धो गवयोऽपि तादृशो ज्ञेय इत्यर्थः।
अत्र प्रसिद्धो गौस्तत्साधर्म्यादप्रसिद्धस्य गवयस्य साधनमिति॥२३॥

उपमानं व्यावर्ण्य शाब्दप्रामाण्यमाह—

शाब्दमाप्तोपदेशस्तु, मानमेवं चतुर्विधम्।
प्रमेयं त्वात्मदेहार्थ–बुद्धीन्द्रियसुखादि च॥२४॥

व्याख्या–'तु' पुनः 'आप्तोपदेशः' 'शाब्दम्' ...
इत्यवितथवादी हितश्चाप्तः प्रत्ययितजनस्तस्य य ...
वाक्यं तच्छाब्दम्–आगमप्रमाणं ज्ञेयमिति। 'एवमुक्तभङ्ग्या' ...

१. मानं समाख्या° ध। २६ अत्र गौतमसूत्रम्–"प्रसिद्धसाधर्म्या-
त्साध्यसाधनमुपमानम्।" (१ १–६)

प्रमाणं, 'चतुर्विधं' चतुःप्रकारं निश्चितमित्यर्थः। अथ प्रमेयलक्षणमाह 'प्रमेयं त्वात्मदेहार्थबुद्धीन्द्रियसुखादि च' इति। प्रमाणग्राह्योऽर्थः प्रमेयं, तुः पुनरर्थे, आत्मा च देहश्चेत्यादि द्वन्द्वः, आदिशब्देन शेषाणामपि षण्णां प्रमेयार्थानां सङ्ग्रहः। तथा च नैयायिकसूत्रम्[२७]–तच्च–आत्म–शरीर–इन्द्रिय–अर्थ–बुद्धि–मनः–प्रवृत्ति–दोष–प्रेत्यभाव–फल–दुःख–अपवर्गभेदेन द्वादशविधम्। तत्र सचेतनत्वकर्तृत्वसर्वगतत्वादिधर्मैरात्मा प्रमीयते। एवं देहादयोऽपि प्रमेयतया ज्ञेयाः। अत्र तु ग्रन्थविस्तरभयान्न प्रपञ्चिताः, इतरग्रन्थेभ्यो[१]ऽपि सुज्ञेयत्वाच्चेति ॥ २४ ॥

संशयादिस्वरूपमाह—

**किमेतदिति सन्दिग्धः, प्रत्ययः संशयो मतः।**
**प्रवर्त्तते यदर्थित्वात्, तत्तु साध्यं प्रयोजनम् ॥ २५ ॥**

व्याख्या–दूरावलोकनेन पदार्थपरिच्छेदकविशेषधर्मेषु संशयानः प्राह 'किमेतदिति,' एतत् किं स्थाणुर्वा पुरुषो वा ? इति यः 'सन्दिग्धः प्रत्ययः' स 'संशयो' नाम–तत्त्वविशेषो 'मतः'–सम्मतस्तच्छासन इति। प्रयोजनमाह[१]–'तत् तु' तत् पुनः

---

२७. गौतमसूत्रमिदम् १-१-९, पश्यत स्याद्वादमञ्जरी पृ. ३१ तम परिशिष्ट क, ७१ तमं च प्रन्यपत्रकम्। १. अपरग्रन्थे° ध.। २. °ह 'तु' पुनः तत् प्रयो° ध.।

'प्रयोजनं' नाम तत्त्वं यत् किमित्याह–'अर्थित्वात्' प्राणी 'साध्यं' कार्यं प्रति वर्त्तते, प्रतीत्यध्याहार्यम्, न हि निष्फलः कार्यारम्भ इति 'अर्थित्वादु'क्तम्, एवं यत् प्रवर्त्तनं तत् प्रयोजनमित्यर्थः॥२५॥

दृष्टान्तस्तु भवेदेष, विवादविषयो न यः ।
सिद्धान्तस्तु चतुर्भेदः, सर्वतन्त्रादिभेदतः ॥ २६ ॥

व्याख्या–'तु' पुनरेष दृष्टान्तो नाम तत्त्वं भवेत्, यत् किमिति-'विवादविषयो न यः,' यस्मिन्नुपन्यस्ते वचने वादगोचरो न भवति, 'इदमित्थं भवति न वेति' विवादो न भवतीत्यर्थः। तावच्चान्वयव्यतिरेकप्रयुक्तो[1]ऽर्थः स्खलति यावन्न स्पष्टदृष्टान्तावष्टम्भः। उक्तं च—

[२८]"तावदेव चलत्यर्थो, मन्तुर्विषयमागतः।
यावन्नोत्तम्भनेनैव दृष्टान्तेनावलम्ब्यते ॥" (२६)

एष दृष्टान्तो ज्ञेयः। सिद्धान्तः पुनश्चतुर्भेदो भवेत्, कथमित्याह–'सर्वतन्त्रादिभेदतः' इति, सर्वतन्त्रसिद्धान्त इति प्रथमो भेदः। आदिशब्दाद्भेदत्रयमिदं ज्ञेयं, यथा प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्तश्चेति, अमी चत्वारः सिद्धान्तभेदाः। नाममात्रकथनमिदम्, विस्तरग्रन्थेभ्यस्तु विशेषार्थो[2] ज्ञेयः ॥ २६ ॥

१. °कयुक्तो° घ.। २८ समवतारित चेद पद्य तर्करहस्यदीपिकावृत्तौ।(पृ ३०) २. °शेषो ज्ञेयः। घ.।

अवयवादितत्त्वत्रयस्वरूपमाह—[1]

प्रतिज्ञाहेतुदृष्टान्तो–पनया निगमस्तथा ।
अवयवाः पञ्च तर्कः, संशयोपरमे भवेत् ॥ २७ ॥
यथा काकादिसम्पातात्, स्थाणुना भाव्यमत्र हि ।
ऊर्ध्वं सन्देहतर्काभ्यां, प्रत्ययो निर्णयो मतः ॥२८॥

युग्मम् ॥[2]

व्याख्या–अवयवाः पञ्चेति सम्बन्धः, पूर्वार्धमाह-प्रतिज्ञा हेतु-दृष्टान्त उपनयो निगमनं चेति पञ्चावयवाः।[२६] तत्र १ प्रतिज्ञापक्षः, कृशानुमानयं सानुमानित्यादि। २ हेतुर्लिङ्गवचनं, धूमवत्त्वादित्यादि। ३ दृष्टान्त उदाहरणवचनं, यो यो धूमवान् स स वह्निमान् यथा महानस इत्यादि। ४ उपनयो हेतोरुपसंहारकं वचनं, धूमवांश्चाय-मित्यादि। ५ निगमनं हेतूपदेशेन पुनः साध्यधर्मोपसंहरणं, तस्मा द्वह्निमानित्यादि पञ्चावयवस्वरूपनिरूपणमित्यवयवतत्त्वं[५] ज्ञेयमिति। तर्कः संशयोपरमे भवेत् यथा काके 'त्यादि, दूरादृग्गोचरे स्पष्टमतिभालाभावात् किमयं स्थाणुर्वा पुरुषो वेति संशयस्तस्यो-

१. 'त्त्वस्वरू' ध.। २. 'मनं तथा। ज पु। २६. गौतमसूत्र-मिदं-" प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः "( १-१-३२ ) इति प्रमाण-मीमांसायाम्। ( पृ. ७६ पुना ) ५. 'पणम् अत्र' ध.।

'प्रयोजनं' नाम तत्त्वं यत् किमित्याह–'अर्थित्वात्' प्राणी 'साध्यं कार्यं प्रति वर्त्तते, प्रवीत्यध्याहार्यम्, न हि निष्फलः कार्यारम्भ इति' अर्थित्वाद् 'क्रम्, एवं यत् प्रवर्त्तनं तत् प्रयोजनमित्यर्थः॥२५॥

दृष्टान्तस्तु भवेदेष, विवादविषयो न यः ।
सिद्धान्तस्तु चतुर्भेदः, सर्वतन्त्रादिभेदतः ॥ २६ ॥

व्याख्या–'तु' पुनरेष दृष्टान्तो नाम तत्त्वं भवेत्, यत् किमिति 'विवादविषयो न यः,' यस्मिन्नुपन्यस्ते वचने वादगोचरो भवति, 'इदमित्थं भवति न वेति' विवादो न भवतीत्यर्थः। तावच्चा[1]न्वयव्यतिरेकप्रयुक्तोऽर्थः स्खलति यावन्न स्पष्टदृष्टान्तावष्टम्भः उक्तं च—

[28]"तावदेव चलत्यर्थो, मन्तुर्विषयमागतः।
यावन्नोत्तम्भनेनैव, दृष्टान्तेनावलम्ब्यते ॥" (२६)

एष दृष्टान्तो ज्ञेयः। सिद्धान्तः पुनश्चतुर्भेदो भवेत्, कथमित्याह 'सर्वतन्त्रादिभेदतः' इति, सर्वतन्त्रसिद्धान्त इति प्रथमो भेदः आदिशब्दाद्भेदत्रयमिदं ज्ञेयं, यथा प्रतितन्त्रसिद्धान्तोऽधिकरण-सिद्धान्तोऽभ्युपगमसिद्धान्तश्चेति, अमी चत्वारः सिद्धान्तभेदाः नाममात्रकथनमिदम्, विस्तरग्रन्थेभ्यस्तु विशेषार्थो[2] ज्ञेयः ॥ २६ ॥

---

१. °कप्रयुक्तो° भ.। २८. समवतारितं चेदं पद्यं तर्करहस्यदीपिकावृत्तौ।(पृ. ३०) २. °शेषो ज्ञेयः। भ.।

अवयवादितत्त्वत्रयस्वरूपमाह[1]—

प्रतिज्ञाहेतुदृष्टान्तो–पनया निगमैस्तथा।
अवयवाः पञ्च तर्कः, संशयोपरमे भवेत् ॥ २७ ॥
यथा काकादिसम्पातात्, स्थाणुना भाव्यमत्र हि।
ऊर्ध्वं सन्देहतर्काभ्यां, प्रत्ययो निर्णयो मतः ॥२८॥

युग्मम् ॥

व्याख्या—अवयवाः पञ्चेति सम्बन्धः, पूर्वार्धमाह–प्रतिज्ञा हेतु-दृष्टान्त उपनयो निगमनं चेति पञ्चावयवाः।[२९] तत्र १ प्रतिज्ञापक्षः, कृशानुमानयं सानुमानित्यादि। २ हेतुर्लिङ्गवचनं, धूमवत्त्वादित्यादि। ३ दृष्टान्त उदाहरणवचनं, यो यो धूमवान् स स वह्निमान् यथा महानस इत्यादि। ४ उपनयो हेतोरुपसंहारकं वचनं, धूमवांश्चाय-मित्यादि। ५ निगमनं हेतूपदेशेन पुनः साध्यधर्मोपसंहरण, तस्मा-द्वह्निमानित्यादि पञ्चावयवस्वरूपनिरूपण[5]मित्यवयवतत्त्वं ज्ञेयमिति। 'तर्कः संशयोपरमे भवेत् यथा काके'त्यादि, दूरादृग्गोचरे स्पष्टप्रतिभासाभावात् किमयं स्थाणुर्वा पुरुषो वेति संशयस्तस्यो-

१. °त्त्वस्वरू° ध.। २. °मनं तथा। ज पु। २९. गौतमसूत्र-मिदं–"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः"(१–१–३२) इति प्रमाण-मीमांसायाम्। (पृ. ७९ पुना) ५. °पणम् अव° ध.।

परमेऽभावे सति तर्को भवेत्-तर्को नाम तत्त्वं स्यात्। कथमित्याह-'यथे'ति, दूरादूर्ध्वस्थं पदार्थं विलोक्य स्थाणुपुरुषयोः सन्दिहानोऽवहितीभूय विमृशति 'काकादिसम्पातादा'दिशब्दाद्वल्ल्युत्सर्पणादयः स्थाणुधर्मा ग्राह्याः, वायसप्रभृतिसम्बन्धादत्र स्थाणुना-कीलकेन भाव्यम्, पुरुषे हि शिरःकम्पनहस्तचालनादिभिया काकपातानुपपत्तेः, एवं संशयाभावे तर्कतत्त्वं ज्ञेयमिति। 'ऊर्ध्वमि'-त्यादि, पूर्वोक्तलक्षणाभ्यां सन्देहतर्काभ्यामूर्ध्वमनन्तरं यः 'प्रत्ययः'-'स्थाणुरेवायं' 'पुरुष एवायं' यः प्रतीतिविषयः स 'निर्णयः' निर्णयनामा तत्त्वविशेषो ज्ञेयः, यत्तदावर्थसम्बन्धादनुक्तावपि ज्ञेयौ ॥ २७-२८ ॥

वादतत्त्वमाह—

आचार्यशिष्ययोः पक्ष-प्रतिपक्षपरिग्रहात् ।
यः कथाभ्यासहेतुः स्या-दसौ वाद उदाहृतः ॥२९॥

व्याख्या-'असौ वादः उदाहृतः' कथितस्तज्ज्ञैरिति। यः किमित्याह-कथाभ्यासहेतुः, कथा[30] प्रामाणिकी तस्या अभ्यासे हेतुः-

30 'कथा द्विविधा-वीतरागकथा विजिगीषुकथा च, यत्र वीतरागेण गुरुणा सह शिष्यस्तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति साधनं स्वपक्षे उपालम्भश्च परपक्षेऽनुमानस्य दूषणं, सा वीतरागकथा वादसंज्ञयैवोच्यते, वाद प्रतिपक्षस्थापनाहीनमपि कुर्यात्। प्रश्नद्वारेणैव यत्र विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते, वीतरागो वा परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थं च प्रवर्तते,

कारणं, कयोः? आचार्यशिष्ययोः; आचार्यः-गुरुरध्यापकः, शिष्यश्च-अध्येता विनेय इति, कस्मात्? पक्षप्रतिपक्षपरिग्रहात्, पक्षः-पूर्वपक्षः प्रतिज्ञादिसङ्ग्रहः, प्रतिपक्षः-उत्तरपक्षः. पूर्वपक्षवादिप्रयुक्तप्रतिज्ञादिप्रतिपन्थिकोपन्यासप्रौढिः, तयोः परिग्रहात्-सङ्ग्रहादित्यर्थः। आचार्यः पूर्वपक्षमङ्गीकृत्याचष्टे शिष्यश्चोत्तरपक्षमुररीकृत्य पूर्वपक्षं खण्डयति, एवं निग्राहकजयपराजयछलजात्याद्यनपेक्षतयाऽभ्यासनिमित्तं[1] पक्षप्रतिपक्षसङ्ग्रहेण[2] यत्र गुरुशिष्यौ गोष्ठीं कुरुतः स वादो ज्ञेयः ॥ २९ ॥

[3]अथैतद्विशेषमाह—

विजिगीषुकथायां तु, छलजात्यादिदूषणम् ।
स जल्पः सा वितण्डा तु, या प्रतिपक्षविवर्जिता ॥३०॥

व्याख्या-'स जल्प' इति सम्बन्धः। यत्तु 'विजिगीषुकथायां' विजयाभिलाषिवादिप्रतिवादिप्रारभ्यमाणोपन्यासगोष्ठ्यां सत्यां 'छलजात्यादिदूषणं,' छलं त्रिप्रकारं-वाक्छलं १, सामान्यच्छलं २, उपचारछलं ३, चेति. जातयश्चतुर्विंशतिभेदाः, आदिशब्दान्नि-

चतुरङ्गा—वादिप्रतिवादिसभापतिप्राश्निकाङ्गा, विजिगीषुकथा जल्पवितण्डासंज्ञोच्यते' ति तर्करहस्यदीपिकावृत्तौ । (पृ. ३१) १. 'क्षि' पु । २. °ग्रहेण पु. । ३. अथ तद्विशे° घ. । ४. 'गोपोः क° घ. ।

**हेत्वाभासा असिद्धाद्या–श्छलं कूपो नवोदकः।**
**जातयो दूषणाभासाः, पक्षादिर्दूष्यते न यैः॥ ३१॥**

व्याख्या–हेत्वाभासा[३३] ज्ञेया इति, के ते? इत्याह–'असिद्धाद्याः,' असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाः पञ्च हेत्वाभासा ज्ञेयाः। तत्र पक्षे धर्मत्वं यस्य नास्ति सोऽसिद्धः१, विपक्षे सन् सपक्षे चासन् विरुद्धः २, पक्षत्रयवृत्तिरनैकान्तिकः ३, प्रत्यक्षानुमानागमविरुद्धपक्षवृत्तिः कालात्ययापदिष्टः ४, विशेषाग्रहणं हेतुत्वेन प्रयुज्यमानं प्रकरणसमः ५। उदाहरणानि स्वयमभ्यूह्यानि। 'छलं कूपो नवोदकः' इति, परोपन्यस्तवादे स्वाभिमतार्थान्तरकल्पनया वचनविघातश्छलम्, कथमित्याह–वादिना 'कूपो नवोदक' इति कथायां प्रत्यग्रार्थवाचकतया नवशब्दप्रयोगे कृते छलवादी नव सङ्ख्यामारोप्य दूषयति 'कुत[1] एक एव कूपो नवसङ्ख्योदकः?' इति वाक्छलम्। प्रस्तावगतत्वेन शेषछलद्वयमप्याह–सम्भावनयातिप्रसङ्गिनोऽपि सामान्यस्योपन्यासे हेतुत्वारोपणेन तन्निषेधः सामान्यछलं, यथा–'अहो नु खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न' इति ब्राह्मणस्तुतिप्रसङ्गे कश्चिद्वदति 'सम्भवति

३३. अत्र गौतमसूत्रम्–'सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः।" (१-२-४) इति प्रमाणमीमांसाप्रस्तावना पृ ४. पुना।

१. °त पतत्कूपो घ।

ग्रहस्थानादिपरिग्रहः, एतैः कृत्वा दूषणं–परोपन्यस्तपक्षादेर्दूषणजालमुत्पाद्य निराकरणम्। अभिमतं च स्वपक्षस्थापनेन सन्मार्गप्रतिपत्तिनिमित्ततया छलजात्याद्युपन्यासैः परप्रयोगस्य दूषणोत्पादनम्, तथा चोक्तम्—

[३१]दुःशिक्षितकुतर्कांश-लेशवाचालिताननाः।
शक्याः किमन्यथा जेतुं वितण्डाटोप[१]पण्डिताः॥ (१७)
गतानुगतिको लोकः कुमार्गं तत्प्रतारितः।
[३२]मार्गादिति छलादीनि, प्राह [२]कारुणिको मुनिः॥ (१८) इति।

सङ्कटे प्रस्तावे च सति छलादिभिरपि स्वपक्षस्थापनमनुमतम्, परविजये हि धर्मध्वंसादिदोषसम्भवस्तस्माद्वरं छलादिभिरपि जयः। 'सा वितण्डा तु या प्रतिपक्षविवर्जिता' इति, सा पुनर्वितण्डा या, किं? विजिगीषुकथैव प्रतिपक्षविवर्जिता, वादिप्रयुक्तपक्षप्रतिरोधकः प्रतिवाद्युपन्यासः प्रतिपक्षस्तेन 'विवर्जिता' रहितेति प्रतिपक्षसाधनाहीनो वितण्डावादः। वैतण्डिको हि स्वाभ्युपगतपक्षमस्थापयन् यत् किञ्चिद्वादेन परोक्तमेव दूषयतीत्यर्थः॥ ३०॥

३१ 'न्यायमञ्जरी पृ ११' इति सूचित स्याद्वादमञ्जर्यां पृ ६० प्रस्तावनासत्कम्। इमे पद्य प्रमाणमीमांसायां (पृ. ५२) तर्करहस्यदीपिकायामपि (पृ ३२/१ वर्तेते। १. °पमपिडताः॥ ध.। तर्करहस्यदीपिकायामप्येव पाठ, पृ ३२/१। स्याद्वादमञ्जर्यामप्येव पाठः, पृ. ६९ (पुना)। ३२ 'मा गादि'ति प्रमाणमीमांसायाम्। (पृ. ५२) एव च स्याद्वादमञ्जर्यामपि पृ ६९। २ कारणिको ज. पु.।

हेत्वाभासा असिद्धाद्या–श्छलं कूपो नवोदकः ।
जातयो दूषणाभासाः, पक्षादिर्दूष्यते न यैः ॥ ३१ ॥

व्याख्या–हेत्वाभासा[३३] ज्ञेया इति, के ते ? इत्याह–'असिद्धाद्याः,' असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाः पञ्च हेत्वाभासा ज्ञेयाः । तत्र पक्षे धर्मत्वं यस्य नास्ति सोऽसिद्धः १, विपक्षे सन् सपक्षे चासन् विरुद्धः २, पक्षत्रयवृत्तिरनैकान्तिकः ३, प्रत्यक्षानुमानागमविरुद्धपक्षवृत्तिः कालात्ययापदिष्टः ४, विशेषाग्रहणं हेतुत्वेन प्रयुज्यमानं प्रकरणसमः ५ । उदाहरणानि स्वयमभ्यूह्यानि । 'छलं कूपो नवोदकः' इति, परोपन्यस्तवादे स्वाभिमतार्थान्तरकल्पनया वचनविघातश्छलम्, कथमित्याह–वादिना 'कूपो नवोदकः' इति कथायां प्रत्यग्रार्थवाचकतया नवशब्दप्रयोगे कृते छलवादी नव सङ्ख्यामारोप्य दूषयति 'कुत[१] एक एव कूपो नवसङ्ख्योदकः ?' इति वाक्छलम् । प्रस्तावगतत्वेन शेषछलद्वयमप्याह–सम्भावनयातिप्रसङ्गिनोऽपि सामान्यस्योपन्यासे हेतुत्वारोपणेन तन्निषेधः सामान्यछलं, यथा–'अहो नु खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न' इति ब्राह्मणस्तुतिप्रसङ्गे कश्चिद्वदति 'सम्भवति

३३ अत्र गौतमसूत्रम्-'सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ।" (१-२-४) इति प्रमाणमीमांसाप्रस्तावना पृ ४ पुना ।

१ °त एतत्कूपो घ ।

ब्राह्मणे विद्याचरणसंपदि'ति, तच्छलवादी ब्राह्मणत्वस्य, हेतुत्वमारोप्य निराकुर्वन्नभियुङ्क्ते 'यदि ब्राह्मणे विद्याचरणसंपद्भवति[1] व्रात्येऽपि सा भवेत्, व्रात्योऽपि ब्राह्मण एवे'ति। औपचारिके प्रयोगे मुख्येन प्रतिषेधेन प्रत्यवस्थानमुपचारछलं, यथा-'मञ्चाः क्रोशन्ती'त्युक्ते परः प्रत्यवतिष्ठते-'कथमचेतना मञ्चाः क्रोशन्ति? मञ्चस्थास्तु पुरुषाः क्रोशन्ती'ति छलत्रयस्वरूपं ज्ञेयमिति। 'जातय' इत्यादि, 'दूषणाभासाः' जातयः, अदूषणान्यपि दूषणवदाभासन्त इति दूषणाभासाः, 'यैः' किं? 'पक्षादिर्न दूष्यते,' आभासमात्रत्वान्न पक्षदोषमुद्भावयितुं शक्यते, केवलं सम्यग्घेतौ हेत्वाभासे वा वादिना प्रयुक्ते झगिति तद्दोषवत्त्वाप्रतिभासे[2] हेतुप्रतिबिम्बनप्रायं किमपि प्रत्यवस्थानं जातिः। सा चतुर्विंशतिभेदा साधर्म्यादिप्रत्यवस्थानभेदेन, यथा-साधर्म्य १ वैधर्म्य २-उत्कर्ष ३-अपकर्ष ४-वर्ण्य ५-अवर्ण्य ६-विकल्प ७-साध्य ८-प्राप्ति ९-अप्राप्ति १०-प्रसङ्ग ११-प्रतिदृष्टान्त १२-अनुत्पत्ति १३-संशय १४-प्रकरण १५-अहेतु १६-अर्थापत्ति १७-अविशेष

1. "व्रात्य.-संस्कारवर्जितो द्विजः" टिप्पणी। २. °त्त्वानवभासे ध.। तद्दोषवत्त्वाप्रतिभासे इति तर्करहस्यदीपिकाख्यबृहद्वृत्तौ पृ. ३३/१। स्याद्वादमञ्जर्यां (पृ. ७२) प्रमाणमीमांसायां (पृ. ८५) च 'तद्दोषवत्त्वाप्रतिभासे' इति पाठः।

१८–उपपत्ति १९–उपलब्धि २०–अनुपलब्धि २१–नित्य २२–अनित्य २३–कार्यसमाः २४। तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमा जातिर्भवति, 'अनित्यः शब्दः कृतकत्वात् घटवदि'ति प्रयोगे कृते साधर्म्यप्रयोगेणैव प्रत्यवस्थानं–' नित्यः शब्दो निरवयवत्वादाकाशवत्, न चास्ति विशेषहेतुर्घटसाधर्म्यात् कृतकत्वादनित्यः शब्दो न पुनराकाशसाधर्म्यान्निरवयवत्वान्नित्य इति' १।

वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिर्भवति, अनित्यः शब्दः कृतकत्वाद् घटवदित्यत्रैव प्रयोगे स एव प्रतिहेतुर्वैधर्म्येण प्रयुज्यते–नित्यः शब्दो निरवयवत्वात्, अनित्यं हि सावयवं दृष्टं घटादीनि, न चास्ति विशेषहेतुर्घटसाधर्म्यात् कृतकत्वादनित्यः शब्दो न पुनस्तद्वैधर्म्यान्निरवयवत्वान्नित्य इति' २।

उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती भवतः, तत्रैव प्रयोगे "दृष्टान्तधर्मं किञ्चित्साध्यधर्मिण्यापादयन्नुत्कर्षसमां जातिं प्रयुङ्क्ते-'यदि घटवत् कृतकत्वादनित्यः शब्दो घटवदेव मूर्तोऽपि भवेत्, न चेन्मूर्तो घटवदनित्योऽपि मा भूदि'ति शब्दे धर्मान्तरोत्कर्षमापादयति ३।

१. 'घ हेतु' ध। २. 'नित्य' इति २। ध।

१. 'र्तो' भवेत् 'ध।

ब्राह्मणे विद्याचरणसंपदि'ति, तच्छलवादी ब्राह्मणत्वस्य, हेतुत्वमारोप्य निराकुर्वन्नभियुङ्क्ते 'यदि ब्राह्मणे विद्याचरणसंपद्भवति[1] व्रात्येऽपि सा भवेत्, व्रात्योऽपि ब्राह्मण एवे'ति। औपचारिके प्रय गे मु"येन प्रतिषेधेन प्रत्यवस्थानमुपचारछलं, यथा-'मञ्चाः क्रोशन्ती'त्युक्ते परः प्रत्यवतिष्ठते-'कथमचेतना मञ्चाः क्रोशन्ति? मञ्चस्थास्तु पुरुषा क्रोशन्ती'ति छलत्रयस्वरूपं ज्ञेयमिति। 'जातय' इत्यादि, 'दूषणाभासा' जातयः, अदूषणान्यपि दूषणवदाभासन्त इति दूषणाभासाः, 'यैः' किं? 'पक्षादिर्न दूष्यते,' आभासमात्रत्वान्न पक्षदोषमुद्भावयितु शक्यते; केवलं सम्यग्घेतौ हेत्वाभासे वा वादिना प्रयुक्ते झगिति तद्दोषवत्त्वाप्रति-[2]भासे हेतुप्रतिबिम्बनप्राय किमपि प्रत्यवस्थान जातिः। सा चतुर्विंशतिभेदा साधर्म्यादिप्रत्यवस्थानभेदेन, यथा-साधर्म्य १ वैधर्म्य २-उत्कर्ष ३-अपकर्ष ४-वर्ण्य ५-अवर्ण्य ६-विकल्प ७-साध्य ८-प्राप्ति ९-अप्राप्ति १०-प्रसङ्ग ११-प्रतिदृष्टान्त १२-अनुत्पत्ति १३-सशय १४-प्रकरण १५-अहेतु १६-अर्थापत्ति १७-अविशेष

---

१ 'नान्य-छरक रवर्नितो द्विन' धटिप्पणी। २ °त्वानवभासे ध। तद्दोषत्वाप्रतिभासे इति नर्करहस्यदीपिकारयबृहद्वृत्तौ पृ ३३/१। स्याद्वादमञ्जर्यां (पृ ७२) प्रमाणमीमांसायां (पृ ८५) च 'तद्दोषवत्त्वाप्रतिभासे' इति पाठ।

१८–उपपत्ति १९–उपलब्धि २०–अनुपलब्धि २१–नित्य २२–अनित्य २३–कार्यसमाः २४ । तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमा जातिर्भवति, 'अनित्यः शब्दः कृतकत्वात् घटवदि'ति प्रयोगे कृते साधर्म्यप्रयोगेणैव प्रत्यवस्थानं–' नित्यः शब्दो निरवयवत्वादाकाशवत्, न चास्ति विशेषहेतुर्घटसाधर्म्यात् कृतकत्वादनित्यः शब्दो न पुनराकाशसाधर्म्यान्निरवयवत्वान्नित्य इति' १ ।

वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिर्भवति, अनित्यः शब्दः कृतकत्वाद् घटवदित्यत्रैव प्रयोगे स एव प्रतिहेतुर्वैधर्म्येण प्रयुज्यते– नित्यः शब्दो निरवयवत्वात्, अनित्यं हि सावयवं दृष्टं घटादीनि, न चास्ति विशेषहेतुर्घटसाधर्म्यात् कृतकत्वादनित्यः शब्दो न पुनस्तद्वैधर्म्यान्निरवयवत्वान्नित्य इति' २ ।

उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती भवतः, तत्रैव 'प्रयोगे "दृष्टान्तधर्मं किञ्चित्साध्यधर्मिण्यापादयन्नुत्कर्षसमां जातिं प्रयुङ्क्ते–'यदि घटवत् कृतकत्वादनित्यः शब्दो घटवदेव मूर्तोऽपि भवेत्, न चेन्मूर्तो घटवदनित्योऽपि मा भूदि'ति शब्दे धर्मान्तरोत्कर्षमापादयति ३ ।

१ 'च हेतु' प । २. 'नित्य' इति २ । प ।
३. 'र्तो' भवेत्'प' ।

अपकर्षस्तु–'घटः कृतकः सन्नश्रावणो दृष्ट एवं शब्दोऽपि भवेत्,नो चेद् घटवदनित्योऽपि माभूदि'ति शब्दे श्रावणधर्ममपकर्षति ४।

वर्ण्यावर्ण्याभ्यां प्रत्यवस्थानं वर्ण्यावर्ण्यसमे जाती भवतः, ख्यापनीयो वर्ण्यस्तद्विपरीतोऽवर्ण्यस्तावेतौ वर्ण्यावर्ण्यौ साध्यदृष्टान्तधर्मौ विपर्यस्यन् वर्ण्यावर्ण्यसमे जाती प्रयुङ्क्ते, 'यथाविधः शब्दधर्मः कृतकत्वादिर्न तादृग् घटधर्मो, यादृग् घटधर्मो न तादृक् शब्दधर्म इति, साध्यधर्मदृष्टान्तधर्मौ हि तुल्यौ कर्त्तव्यौ, अत्र तु विपर्यासः, यतो यादृग् घटधर्मः कृतकत्वादिर्न तादृक् शब्दधर्मः, घटस्य ह्यन्यादृशं कुम्भकारादिजन्यं कृतकत्वं शब्दस्य हि ताल्वोष्ठादिव्यापारजन्यमिति' ५–६।

धर्मान्तरविकल्पेन प्रत्यवस्थानं विकल्पसमा जातिः, यथा 'कृतकं किञ्चिन्मृदु दृष्टं राङ्कव[1]शय्यादिकं, किञ्चित् कठिनं कुठारादि, एवं कृतकं किञ्चिदनित्यं भविष्यति घटादिकं, किञ्चिन्नित्यं शब्दादीति' ७।

साध्यसाम्या[2]पादनेन प्रत्यवस्थानं साध्यसमा जातिः[3], यथा–

१. "राङ्कव मृगरोमजम्" घ टिप्पणी।
२. °साधर्म्यापाद° घ.। ३. °तिर्भवतिर्य(य)था पु.।

'कृतकः यदि यथा घटस्तथा शब्दः प्राप्तः तर्हि यथा शब्दस्तथा घट इति, शब्दश्च साध्य इति घटोऽपि साध्यो भवेत्, ततश्च न साध्यः साध्यस्य दृष्टान्तः स्यात्, न चेदेवं तथापि वैलक्षण्यात् सुतरामदृष्टान्त' इति ८।

प्राप्त्यप्राप्तिविकल्पाभ्यां प्रत्यवस्थानं प्राप्त्यप्राप्तिसमे जाती, यथा–' यदेतत् कृतकत्वं त्वया साधनमुपन्यस्तं तत् किं प्राप्य साधयत्यप्राप्य वा ? प्राप्य चेद् द्वयोर्विद्यमानयोरेव प्राप्तिर्भवति न सदसतोरिति द्वयोश्च सत्त्वात् किं कस्य साध्यं साधनं वा ? अप्राप्य तु साधनत्वमयुक्तमतिप्रसङ्गादि 'ति ९-१०।

अतिप्रसङ्गापादनेन प्रत्यवस्थानं प्रसङ्गसमा जातिः, यथा- ' यद्यनित्यत्वे कृतकत्वं साधनं, कृतकत्व इदानीं किं साधनं, तत्साधने किं साधनमि 'ति ११।

प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्ते समा जातिः, यथा'ऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदि ' त्युक्ते जातिवाद्याह– 'यथा घटः प्रयत्नानन्तरीयकोऽनित्यो दृष्ट एवं प्रतिदृष्टान्त आकाशं नित्यमपि प्रयत्नानन्तरीयकं दृष्टम्, कूपखननप्रयत्नानन्तरमुपलम्भादि'ति, न चेदमनैकान्तिकत्वोद्भावनं, भङ्ग्यन्तरेण प्रत्यवस्थानात् १२।

अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमा जातिः, यथा–' अनुत्पन्ने

अपकर्षस्तु–'घटः कृतकः सन्नश्रावणो दृष्ट एवं शब्दोऽपि भवेत्, नो चेद् घटवदनित्योऽपि माभूदि'ति शब्दे श्रावणधर्ममपकर्षति ४।

वर्ण्यावर्ण्याभ्यां प्रत्यवस्थानं वर्ण्यावर्ण्यसमे जाती भवतः, ख्यापनीयो वर्ण्यस्तद्विपरीतोऽवर्ण्यस्तावेतौ वर्ण्यावर्ण्यौ साध्यदृष्टान्तधर्मौ विपर्यस्यन् वर्ण्यावर्ण्यसमे जाती प्रयुङ्क्ते, 'यथाविधः शब्दधर्मः कृतकत्वादिर्न तादृग् घटधर्मो, यादृग् घटधर्मो न तादृक् शब्दधर्म इति, साध्यधर्मदृष्टान्तधर्मौ हि तुल्यौ कर्त्तव्यौ, अत्र तु विपर्यासः, यतो यादृग् घटधर्मः कृतकत्वादिर्न तादृक् शब्दधर्मः, घटस्य ह्यन्यादृशं कुम्भकारादिजन्यं कृतकत्वं शब्दस्य हि ताल्वोष्ठादिव्यापारजन्यमिति' ५–६।

धर्मान्तरविकल्पेन प्रत्यवस्थानं विकल्पसमा जातिः, यथा 'कृतकं किञ्चिन्मृदु दृष्टं राङ्कवशय्यादिकं[1], किञ्चित् कठिनं कुठारादि, एवं कृतकं किञ्चिदनित्यं भविष्यति घटादिकं, किञ्चिन्नित्यं शब्दादीति' ७।

साध्यसाम्यपादनेन[2] प्रत्यवस्थानं साध्यसमा जातिः[3], यथा–

१. "राङ्कव मृगरोमजम्" घ टिप्पणी।

२. °साधर्म्यापाद° घ.। ३. °तिर्भवतिर्य(थ)था पु.।

'कृतकः यदि यथा घटस्तथा शब्दः प्राप्तः तर्हि यथा शब्दस्तथा घट इति, शब्दश्च साध्य इति घटोऽपि साध्यो भवेत्, ततश्च न साध्यः साध्यस्य दृष्टान्तः स्यात्, न चेदेवं तथापि वैलक्षण्यात् सुतरामदृष्टान्त' इति ८।

प्राप्त्यप्राप्तिविकल्पाभ्यां प्रत्यवस्थानं प्राप्त्यप्राप्तिसमे जाती, यथा–'यदेतत् कृतकत्वं त्वया साधनमुपन्यस्तं तत् किं प्राप्य साधयत्यप्राप्य वा ? प्राप्य चेद् द्वयोर्विद्यमानयोरेव प्राप्तिर्भवति न सदसतोरिति द्वयोश्च सत्त्वात् किं कस्य साध्यं साधनं वा ? अप्राप्य तु साधनत्वमयुक्तमतिप्रसङ्गादि'ति ९–१०।

अतिप्रसङ्गापादनेन प्रत्यवस्थानं प्रसङ्गसमा जातिः, यथा–'यद्यनित्यत्वे कृतकत्वं साधनं, कृतकत्व इदानीं किं साधनं, तत्साधने किं साधनमि'ति ११।

प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्ते समा जातिः, यथा'ऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदि' त्युक्ते जातिवाद्याह–'यथा घटः प्रयत्नानन्तरीयकोऽनित्यो दृष्ट एवं प्रतिदृष्टान्त आकाशं नित्यमपि प्रयत्नानन्तरीयकं दृष्टम्, कूपखननप्रयत्नानन्तरमुपलम्भादि'ति, न चेदमनैकान्तिकत्वोद्भावनं, भङ्ग्यन्तरेण प्रत्यवस्थानात् १२।

अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमा जातिः, यथा–'अनुत्पन्ने

अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिः, यथा तत्रैव प्रयत्नानन्तरीयकत्वहेतावुपन्यस्ते सत्याह जातिवादी–'न प्रयत्नकार्यः शब्दः, प्रागुच्चारणादस्त्येवासावावरणयोगात्तु नोपलभ्यते, 'आवरणानुपलम्भेऽप्यनुपलम्भान्नास्त्येव शब्द' इति चेत्, नावरणानुपलम्भेऽप्यनुपलम्भसद्भावात्, आवरणानुपलब्धेश्चानुपलम्भादभावः,[1] तदभावे चावरणोपलब्धेर्भावो भवति, ततश्च मृदन्तरितमूलकीलोदकादिवदावरणोपलब्धिकृतमेव शब्दस्य प्रागुच्चारणादग्रहणमिति प्रयत्नकार्याभावान्नित्यः शब्द'इति[35] २१।

साध्यधर्म्य(र्म)नित्यानित्यत्वविकल्पेन शब्दनित्यत्वापादनं नित्य-

१. तद्भावे घ।

३५ किञ्चित्स्पष्टावबोधार्थं लिख्यतेऽत्र बृहद्वृत्तीयस्थलम्—"अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिः। तत्रैव प्रयत्नानन्तरीयकत्वे हेतावुपन्यस्ते सत्याह जातिवादी–न प्रयत्नानन्तरीयकः कार्यः शब्दः, प्रागुच्चारणादस्त्येवासौ, आवरणयोगात्तु नोपलभ्यते। 'आवरणानुपलम्भेऽप्यनुपलम्भान्नास्त्येवोच्चारणात्प्राक् शब्द' इति चेत्? न, अत्र हि याऽनुपलब्धिः सा स्वात्मनि वर्तते न वा? वर्तते चेत्तदा यत्रावरणेऽनुपलब्धिर्वर्तते तस्यावरणस्य यथानुपलम्भस्तथाऽऽवरणानुपलब्धेरप्यनुपलम्भः स्यात्, आवरणानुपलब्धेश्चानुपलम्भादभावो भवेत्, तदभावे चावरणोपलब्धेर्भावो भवति, ततश्च मृदन्तरितमूलकीलकादिवदावरणोपलब्धिकृतमेव शब्दस्य प्रागुच्चारणादग्रहणम्, अथानुपलब्धिः स्वात्मनि न वर्तते चेत् तर्ह्यनुपलब्धिः स्वरूपेणापि नास्ति, तथाप्यनुपलब्धेरभावे उपलब्धिरूपत्वात्ततोऽपि शब्दस्य प्रागुच्चारणादप्यस्तित्वं स्यादिति द्वेधापि प्रयत्नकार्यत्वाभावान्नित्यः शब्द' इति" २१ (पृ ३४)

मा जातिः, यथा 'ऽनित्यः शब्द' इति प्रतिज्ञाते जातिवादी कल्पयति–'येयमनित्यता शब्दस्योच्यते सा किमनित्या नित्या ति? यद्यनित्या तदियमवश्यमपायिनीत्यनित्यताया अपायान्नित्यः ब्दः, अथानित्यता नित्यैव तथापि धर्मस्य नित्यत्वात्तस्य च राश्रयस्यानुपपत्तेस्तदाश्रयभूतः शब्दोऽपि नित्य एव भवेत्, नित्यत्वे तद्धर्मनित्यत्वायोगादित्युभयथापि नित्यः शब्द' इति २२।

एवं सर्वभावाऽनित्यत्वोपपादनेन प्रत्यवस्थानमनित्यसमा जातिः, था–'घटसाधर्म्यमनित्येन शब्दस्यास्तीति तस्यानित्यत्वं यदि पाद्यते तद्घटेन सर्वपदार्थानामस्त्येव किमपि साधर्म्यमिति ामप्यनित्यत्वं स्यात्, अथ पदार्थान्तराणां तथा भावेऽपि नानि- त्यं तर्हि शब्दस्यापि तन्माभूदि' त्यनित्यत्वमात्रापादनपूर्वकवि- ोद्भावनाद्विशेषसमातो भिन्नेयं जातिः २३।

प्रयत्नकार्यनानात्वोपन्यासेन प्रत्यवस्थानं कार्यसमा जातिः, ा 'ऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वादि' त्युक्ते जातिवाद्याह– यत्नस्य द्वैरूप्यं दृष्टं, किञ्चिदसदेव तेन जन्यते यथा घटादिकं, श्चित् सदेवावरणव्युदासादिनाऽभिव्यज्यते यथा मृदन्तरितमूल- ादि, एवं प्रयत्नकार्यनानात्वादेष प्रयत्नेन शब्दो व्यज्यते ते वेति संशय' इति संशयापादनप्रकारभेदाच्च संशयसमातः

१. 'ते घटादिक किञ्चिदेति स' ज.।

अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिः, यथा तत्रैव प्रयत्नानन्तरीयकत्वहेतावुपन्यस्ते सत्याह जातिवादी–'न प्रयत्नकार्यः शब्दः, प्रागुच्चारणादस्त्येवासावावरणयोगात्तु नोपलभ्यते, 'आवरणानुपलम्भेऽप्यनुपलम्भान्नास्त्येव शब्द' इति चेत्, नावरणानुपलम्भेऽप्यनुपलम्भसद्भावात्, आवरणानुपलब्धेश्चानुपलम्भादभावः, तदभावे[1] चावरणोपलब्धेर्भावो भवति, ततश्च मृदन्तरितमूलकीलोदकादिवदावरणोपलब्धिकृतमेव शब्दस्य प्रागुच्चारणादग्रहणमिति प्रयत्नकार्याभावान्नित्यः शब्द'इति[35] २१ ।

साध्यधर्म्य(र्म)नित्यानित्यत्वविकल्पेन शब्दनित्यत्वापादनं नित्य-

---

१ तद्भावे च ।

३५ किञ्चित्स्पष्टावबोधार्थं लिख्यतेऽत्र बृहद्वृत्तीयस्थलम्— "अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जाति । तत्रैव प्रयत्नानन्तरीयकत्वे हेतावुपन्यस्ते सत्याह जातिवादी–न प्रयत्नानन्तरीयक कार्यं शब्द, प्रागुच्चारणादस्त्येवासौ, आवरणयोगात्तु नोपलभ्यते। 'आवरणानुपलम्भेऽप्यनुपलम्भान्नास्त्येवोच्चरणात्प्राक्शब्द' इति चेत्? न, अत्र हि याऽनुपलब्धिः सा स्वात्मनि वर्तते न वा? वर्तते चेत्तदा यत्रावरणेऽनुपलब्धिर्वर्तते तस्यावरणस्य यथानुपलम्भस्तथाऽवरणानुपलब्धेरप्यनुपलम्भ स्यात्, आवरणानुपलब्धेश्चानुपलम्भादभावो भवेत् तदभावे चावरणोपलब्धेर्भावो भवति, ततश्च मृदन्तरितमूलकीलकादिवदावरणोपलब्धिकृतमेव शब्दस्य प्रागुच्चारणादग्रहणम् अथानुपलब्धिः स्वात्मनि न वर्तते चेत् तर्ह्यनुपलब्धिः स्वरूपेणापि नास्ति, तथाप्यनुपलब्धेरभाव उपलब्धिरूपस्ततोऽपि शब्दस्य प्रागुच्चारणादप्यस्तित्वं स्यादिति द्वेधापि प्रयत्नकार्यत्वाभावान्नित्य शब्द' इति" २१ (पृ ३४)

मा जातिः, यथा 'ऽनित्यः शब्द' इति प्रतिज्ञाते जातिवादी कल्पयति-'येयमनित्यता शब्दस्योच्यते सा किमनित्या नित्या ति? यद्यनित्या तदियमवश्यमपायिनीत्यनित्यताया अपायान्नित्यः ब्दः, अथानित्यता नित्यैव तथापि धर्मस्य नित्यत्वात्तस्य च राश्रयस्यानुपपत्तेस्तदाश्रयभूतः शब्दोऽपि नित्य एव भवेत्, नित्यत्वे तद्धर्मनित्यत्वायोगादित्युभयथापि नित्यः शब्द' इति २२।

एवं सर्वभावाऽनित्यत्वोपपादनेन प्रत्यवस्थानमनित्यसमा जातिः, था-'घटसाधर्म्यमनित्येन शब्दस्यास्तीति तस्यानित्यत्वं यदि पाद्यते तद्घटेन सर्वपदार्थानामस्त्येव किमपि साधर्म्यमिनि ामप्यनित्यत्वं स्यात्, अथ पदार्थान्तराणां तथा भावेऽपि नानि- त्वं तर्हि शब्दस्यापि तन्माभूदि'त्यनित्यत्वमात्रापादनपूर्वकवि- ोद्भावनाचाविशेषसमातो भिन्नेयं जातिः २३।

प्रयत्नकार्यनानात्वोपन्यासेन प्रत्यवस्थानं कार्यसमा जातिः, ा 'ऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वादि' त्युक्ते जातिवाद्याह- यत्नस्य द्वैरूप्यं दृष्टं, किञ्चिदसदेव तेन जन्यते यथा घटादिकं, ञ्चित् सदेवावरणव्युदासादिनाऽभिव्यज्यते यथा मृदन्तरितमूल- ादि, एवं प्रयत्नकार्यनानात्वादेष प्रयत्नेन शब्दो व्यज्यते ते वेति संशय' इति संशयापादनप्रकारभेदान्न संशयसमातः

१. 'ते घटादिक किञ्चिदेति स° ज.।

यदुक्तम्–"[३७] विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम"। तत्र विप्रतिपत्तिः साधनाभासे साधनबुद्धिर्दूषणाभासे च दूषणबुद्धिरिति, अप्रतिपत्तिः साधनस्यादूषणं दूषणस्य चानुद्धरणम्। तच्च निग्रहस्थानं द्वाविंशतिभेदम्, तद्यथा–प्रतिज्ञाहानिः १, प्रतिज्ञान्तरं २, प्रतिज्ञाविरोधः ३, प्रतिज्ञासन्न्यासः ४, हेत्वन्तरम् ५, अर्थान्तरम् ६, निरर्थकम् ७, अविज्ञातार्थम् ८, अपार्थकम् ९, अप्राप्तकालं १०, न्यूनम् ११, अधिकम् १२, पुनरुक्तम् १३, अननुभाषणम् १४. अज्ञानम् १५, अप्रतिभा १६, विक्षेपः १७, मतानुज्ञा १८, पर्यनुयोज्योपेक्षणं १९, निरनुयोज्यानुयोगः २०, अपसिद्धान्तः २१, हेत्वाभासश्च २२। तत्र हेतावनैकान्तिकीकृते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्युपगच्छतः 'प्रतिज्ञाहानि'र्नामनिग्रहस्थानं भवति, यथा-'ऽनित्यः शब्द ऐन्द्रियकत्वाद् घटवदि'ति प्रतिज्ञासाधनाय वादी वदन् परेण 'सामान्यमैन्द्रियक(त्व)मपि नित्यं दृष्टमि'ति हेतावनैकान्तिकीकृते यद्येवं ब्रूयात् 'सामान्यवद् घटोऽपि नित्यो भवति,' स एवं ब्रुवाणः शब्दानित्यत्वप्रतिज्ञां जह्यात् १।

परिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरं साधनीयमभिदधतः 'प्रतिज्ञान्तरं' नाम निग्रहस्थानं भवति, 'अनित्यः शब्द ऐन्द्रियकत्वादि' त्युक्ते तथैव सामान्येन व्यभिचारे नोदिते

३७. गौतमसूत्रमिदं १-२-१९। इति स्याद्वादमञ्जरी प्रस्तावना पृ ३१।

यदि ब्रूया'द्युक्तं सामान्यमैन्द्रियकं नित्यं तद्धि सर्वगतमसर्वगत
शब्द इति सोऽयमनित्यः शब्द' इति पूर्वं प्रतिज्ञातः प्रतिज्ञान्त
'मसर्वगतः शब्द' इति प्रतिज्ञान्तरेण निगृहीतो भवति २।

प्रतिज्ञाहेत्वोर्विरोधः[1] 'प्रतिज्ञाविरोधो' नाम निग्रहस्थानं भव
यथा–गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरि
सोऽयं प्रतिज्ञाहेत्वोर्विरोधो, यदि गुणव्यतिरिक्तं द्रव्य कथं रूपा
भ्योऽर्थान्तरस्यानुपलब्धिः? अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धि
कथं गुणव्यतिरिक्तं द्रव्यमिति? तदयं प्रतिज्ञाविरुद्धाभिधाना
पराजीयते ३।

पक्षसाधने परेण दूषिते तदुद्धरणाशक्त्या प्रतिज्ञामेव निह्नुवा
नस्य 'प्रतिज्ञासन्न्यासो' नाम निग्रहस्थानं भवति, यथा'ऽनित्य
शब्द ऐन्द्रियकत्वादि'त्युक्ते तथैव सामान्येनानैकान्तिकतायामुद्भा
वितायां यदि ब्रूयात्–'क एवमाहानित्यः शब्द' इति प्रतिज्ञासन्न्या
सात् पराजितो भवतीति ४।

अविशेषाभिहिते हेतौ प्रतिषिद्धे तद्विशेषणमभिदधतो 'हेत्व
न्तरं' नाम निग्रहस्थानं भवति, तस्मिन्नेव प्रयोगे तथैव सामान्यस
व्यभिचारेण दूषिते 'जातिमत्त्वे सती'त्यादिविशेष(ण)मुपाद
दानो हेत्वन्तरेण निगृहीतो भवति ५।

---

१ °रोधे प्र° ध।

प्रकृतादर्थादर्थान्तरं तदौ( दनौ )पयिकमभिदधतो'ऽर्थान्तरं' नाम निग्रहस्थानं भवति, यथा–' अनित्यः शब्दः, कृतकत्वादिति हेतुः, हेतुरिति हिनोतेर्धातोस्तुप्रत्यये कृदन्तं पदं, पदं च नाम-तद्धितनिपातोपसर्गा 'इति प्रस्तुत्य नामादीनि व्याचक्षाणोऽर्थान्तरेण निगृह्यत इति ६ ।

अभिधेयरहितवर्णानुपूर्वीप्रयोगमात्रं 'निरर्थकं' नाम निग्रहस्थानं भवति, यथा'ऽनित्यः शब्दः कचटतपानां गजडदबत्वाद् घझढधभवदि'त्येतदपि सर्वथार्थशून्यत्वान्निग्रहाय कल्पेत साध्यानुपयोगाद्वा ७ ।

यत्साधनवाक्यं दूषणवाक्यं वा त्रिरभिहितमपि पर्षत्प्रतिवादिभ्यां बोद्धुं न शक्यते त'दविज्ञातार्थं' नाम निग्रहस्थानं भवति ८।

पूर्वापरासङ्गतपदसमूहप्रयोगादप्रतिष्ठितवाक्यार्थ'मपार्थकं' नाम निग्रहस्थानं भवति, यथा–दश दाडिमानि षडपूपा इत्यादि ९ ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनवचनक्रममुल्लंघ्यावयवविपर्यासेन प्रयुज्यमानमनुमानवाक्य'मप्राप्तकालं 'नाम निग्रहस्थानं भवति, स्वप्रतिपत्तिवत् परप्रतिपत्तेर्जनने परार्थानुमाने क्रमस्याप्यनवगमात् १०।

१ °तार्थाद्° ध । २. पडप्ट पूपा ध. ।

३८. "क्रमस्याप्यङ्गत्वात्" इति प्रमाणमीमांसायाम् । (पृ. १००)

पञ्चावयवे वाक्ये प्रयोक्तव्ये तदन्यतमेनाप्यवयवेन हीनं 'न्यूनं' नाम निग्रहस्थानं भवति, साधनाभावे साध्यसिद्धेरभावात्प्रतिज्ञादीनां पञ्चानामपि साधनत्वादिति ११ ।

एकेनैव हेतुनोदाहरणेन वा प्रतिपादितेऽर्थे हेत्वन्तरमुदाहरणान्तरं वा वदतो'ऽधिकं' नाम निग्रहस्थानं भवति १२ ।

शब्दार्थयोः पुनर्वचनं 'पुनरुक्तं'नाम निग्रहस्थानं भवति, अन्यत्रानुवादात्। शब्दपुनरुक्तं नाम यत्र स एव शब्दः पुनरुच्चार्यते, यथा'ऽनित्यः शब्दोऽनित्यः शब्द' इति, अर्थपुनरुक्तं तु यत्र सोऽर्थः प्रथममन्येन शब्देनो[39]च्चार्यते पुनः पर्यायान्तरेणोच्यते, यथा-'ऽनित्यः शब्दो विनाशी ध्वनि' रिति। अनुवादे तु पौनरुक्त्यमदोषो, यथा–हेतु[1](तूप)देशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति १३ ।

पर्षदा विदितस्य वादि(ना) त्रिरभिहितस्यापि यदप्रत्युच्चारणं त'दननुभाषणं' नाम निग्रहस्थानं भवति १४ ।

पर्षदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादिनो यदज्ञानं त'दज्ञानं' नाम निग्रहस्थानं भवति । अविदितोत्तरविषयो हि को[40]

३९ "शब्देनोक्त.,' इति प्रमाणमीमांसायाम् । (पृ १०१) ।

१ °तुप्रदेशात् ज । गौतमसूत्रमिद–" हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्" १-१ ३९ इति प्रमाणमीमांसायाम् । ( पृ १०१ ) ।

४०. 'किमुत्तर' अ० । बृहद्वृत्तौ ( पृ ३७/१ ) 'कथोत्तरं' प्र. मी. (पृ. १०३)

नामोत्तरं ब्रूयात्? न चाननुभाषणमेवेदं, ज्ञातेऽपि वस्तुन्यनुभाषणासामर्थ्यदर्शनात् १५।

परपक्षे गृहीतेऽप्यनुभाषितेऽपि तस्मिन्नुत्तराऽप्रतिपत्ति'रप्रतिभा' नाम निग्रहस्थानं भवति १६।

कार्यव्यासङ्गात् कथाविच्छेदो 'विक्षेपो' नाम निग्रहस्थानं भवति, सिसाधयिषितस्यार्थस्याशक्यसाधनतामवसाय कथां विच्छिनत्ति– इदं मे करणीयं परिहीयते, [४१]'पीनसेन कण्ठ उपरुद्ध' इत्याद्यभिधाय कथां (वि)च्छिन्दन् विक्षेपेण पराजीयते १७।

स्वपक्षे परापादितदोषमनुद्धृत्य तमेव परपक्षे प्रतीपमापादायतो 'मतानुज्ञा' नाम निग्रहस्थानं भवति, 'चौरो भवान् पुरुषत्वात् प्रसिद्धचौरवदि'त्युक्ते 'भवानपि चौरः पुरुषत्वादि'ति ब्रुवन्नात्मनः परापादितचौरत्वदोषमभ्युपगतवान् भवतीति मतानुज्ञया निगृह्यते १८।

निग्रहप्राप्तस्याऽनिग्रहः 'पर्यनुयोज्योपेक्षणं' नाम निग्रहस्थानं भवति, पर्यनुयोज्यो नाम निग्रहोपपत्त्याऽवश्यं नोदनीय 'इदं ते निग्रहस्थानमुपनतमतो निगृहीतोऽसी'त्येवं वचनीयस्तमुपेक्ष्य न निगृह्णाति यः स पर्यनुयोज्योपेक्षणेन निगृह्यते १९।

अनिग्रहस्थाने निग्रहस्थानानुयोगाद् 'निरनुयोज्यानुयोगो'

४१. "पीनसो रोगविशेष" इति प्र मी. टिप्पणी (पृ १०३)।

नाम निग्रहस्थानं भवति, उपपन्नवादिनमप्रमादिनमनिग्रहार्हमपि निगृहीतोऽसीति यो ब्रूयात् स एवाभूतदोषोद्भावनाद् निगृह्यते २० ।

सिद्धान्तमभ्युपेत्यानियमात् कथामसङ्गोऽपसिद्धान्तो नाम निग्रहस्थानं भवति, यः प्रथमं किञ्चित् सिद्धान्तमभ्युपगम्य[1] कथामुपक्रमते तत्र च सिसाधयिषितार्थसाधनाय परोपलम्भाय वा सिद्धान्तविरुद्धमभिधत्ते, सोऽपसिद्धान्तेन निगृह्यते[42] २१ ।

हेत्वाभासाश्च यथोक्ता असिद्धविरुद्धादयो 'हेत्वाभास'नाम निग्रहस्थानम् २२ ।

इति भेदान्तरानन्त्येऽपि निग्रहस्थानानां द्वाविंशतिर्मूलभेदा निवेदिता इति ॥ ३२ ॥

अथोपसंहरन्नाह—

**नैयायिकमतस्यैवं समासः कथितोऽधुना ।**

व्याख्या—'एवम्' इत्थम्प्रकारतया 'नैयायिकमतस्य' शैवशासनस्य 'समासः' संक्षेपोऽधुना 'कथितः' निवेदितः—

१ °भ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तेन निगृह्यते २१ । घ ।

४२. 'यथा मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह, 'कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गस्य साधिका भवती'त्यनुयुक्तः प्राह—'अनया क्रिययाऽऽराधितो महेश्वरः फलं ददाति राजादिवदि'ति. तस्य मीमांसानभिमतेश्वरस्वीकारादपसिद्धान्तो नाम निग्रहस्थानं भवती'त्यधिकं वृहद्वृत्तौ (पृ. ३७) ।

२ इत्यर्थ. । अथो° ध. । ३. °स्यैव समासः कथितोऽञ्जसा । घ ।

साम्प्रतमेव निष्ठितं ÷ इत्यर्थः ।

४३. प्रसङ्गिकमधिकं किञ्चिदत्रापि निरुप्यते वृद्धदृष्टचितः, तथाहि– " अथ नैयायिकानां यौगापराभिधानानां लिङ्गादिव्यक्तिरुच्यते–ते च दण्डधराः प्रौढकौपीनपरिधानाः कम्बलिकाप्रावृता जटाधारिणो भस्मोद्धूलनपरा यज्ञोपवीतिनो जलाधारपात्रकरा नीरसाहाराः प्रायो वनवासिनो द्रो(दो)र्मूले तुम्बकं बिभ्राणाः कन्दमूलफलाशिन आतिथ्यकर्मनिरताः सस्त्रीका निःस्त्रीकाश्च, निःस्त्रीकास्तेषूत्तमाः, ते च पञ्चाग्निसाधनपराः करे जटादौ च प्राणलिङ्गधराश्चापि भवन्ति, उत्तमां संयमावस्था प्राप्तास्तु नग्ना भ्रमन्ति । एते प्रातर्दन्तपादादिशौचं विधाय शिवं ध्यायन्तो भस्मनाऽङ्गं त्रिस्त्रिः स्पृशन्ति, यजमानो वन्दमानः कृताञ्जलिर्वक्ति ' ओं नमः शिवाय ' इति, गुरुस्तथैव ' शिवाय नमः ' इति प्रतिवक्ति । ते च संसद्येवं वदन्ति–" शैवीं दीक्षां द्वादशाब्दीं सेवित्वा योऽपि मुञ्चति । दासो दासोऽपि भवति सोऽपि निर्वाणमृच्छति ॥ " तेषामीश्वरो देवः सर्वज्ञः सृष्टिसंहारादिकृत्, तस्य चाष्टादशावतारा अमी–नकुली(श)+ १, [ शोष्य ] कौशिकः २, गार्ग्यः ३, मैत्र्यः ४, [अ]* कौरुषः ५, ईशानः ६, पारगार्ग्यः ७, कपिलाण्डः ८, मनुष्यकः ९, ( अपर )卐कुशिकः १०, अत्रिः ११, पिङ्गलः[A]( लाक्षः ) १२, पुष्पकः १३, बृहदा (चा)र्यः[B] १४, अगस्तिः १५, संतानः १६, शशीकरः १७, विद्यागुरुश्च १८, एते तेषां

÷ पश्यत राजशे प स पृ. ८ नम् ।

+ " नकुलीशोऽथ कौशिक. " इति रा प. स. प्येव पाठ । ( पृ. ९ )

* " कौरुषः " इति पाठः । (पृ. ९ ) 卐 ' अपरकुशिकः, "[A] ' पिङ्गलाक्षः "[B] " बृहदाचार्यः " ( पृ ९ )

तीर्थेषाः पूजनीयाः । तेषां सर्वतीर्थेषु भरटा एव पूजकाः । तेषु ये निर्विकारास्ते स्वमीमांसागतमिदं पद्यं दर्शयन्ति—" न स्वर्धुनी न फणिनो न कपालदाम, नेन्दोः कला न गिरिजा न जटा न भस्म । यत्रान्यदेव च न किंचिदुपास्महे तद्,रूपं पुराणमुनिशीलितमीश्वरस्य॥"..."वीतरागं स्मरन्योगी वीतरागत्वमश्नुते, सरागं ध्यायतस्तस्य सरागत्वं तु निश्चितम् ॥ "....एतत्सर्वं लिङ्गवेषदेवादिस्वरूपं वैशेषिकमतेप्यवसातव्यं, यतो नैयायिकवैशेषिकाणां हि मिथः प्रमाणतत्त्वानां संख्याभेदे सत्यप्यन्योन्यं तत्त्वानामन्तर्भावनेऽल्पीयानेव भेदो जायते, तेनैतेषां प्रायो मततुल्यता । उभयेऽप्येते तपस्विनोऽभिधीयन्ते, ते च शैवादिभेदेन चतुर्धा भवन्ति, तदुक्तम्—" आधारभस्मकौपीनजटायज्ञोपवीतिनः । स्वस्वाचारादिभेदेन चतुर्धा स्युस्तपस्विनः ॥ १ ॥ शैवाः पाशुपताश्चैव, महाव्रतधरास्तथा । तुर्याः कालमुखा मुख्या, भेदा एते तपस्विनाम् ॥ २ ॥ " तेषामन्तर्भेदा भरटभक्तलैङ्गिकतापसादयो भवन्ति, भरटादीनां व्रतग्रहणे ब्राह्मणादिवर्णनियमो नास्ति, यस्य तु शिवे भक्तिः स व्रती भरटादिर्भवेत्, परं शास्त्रेषु नैयायिकाः सदा शिवभक्तत्वाच्छैवा इत्युच्यन्ते वैशेषिकास्तु पाशुपता इति, तेन नैयायिकशासनं शैवमाख्यायते वैशेषिकदर्शनं च पाशुपतमिति । " ( पृ. २०।१ ) "अपरं च—अर्थोपलब्धिहेतुः प्रमाणम्, एकात्मसमवायिज्ञानान्तरवेद्यं ज्ञानं प्रमाणाद्भिन्नं फलं, पूर्वं प्रमाणमुत्तरं तु फलम्, स्मृतेरप्रामाण्यम्, परस्परविभक्तौ सामान्यविशेषौ नित्यानित्यत्वे सदसदंशौ च, प्रमाणस्य विषयः पारमार्थिकः, तमश्छाये अद्रव्ये, आकाशगुणः शब्दोऽपौद्ग-

लिकः, संकेतवशादेव शब्दादर्थप्रतीतिर्न पुनस्तत्प्रतिपादनसामर्थ्यात्, धर्मधर्मिणोर्भेदः, सामान्यमनेकवृत्तिः, आत्मविशेषगुणलक्षणं कर्म, वपुर्विषयेन्द्रियबुद्धिसुखदुःखानामुच्छेदादात्मसंस्थानं मुक्तिरिति । न्यायसारे पुनरेवं–नियसंवेद्यमानेन सुखेन विशिष्टात्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति । एषां तर्कग्रन्थाः–न्यायसूत्र–भाष्य–वार्त्तिक–तात्पर्यटीका–परिशुद्धि–न्यायालंकार–वृत्तयः, भासर्वज्ञप्रणीते न्यायसारेऽष्टादशटीकाः, तासु मुख्या न्यायभूषणाख्या न्यायकलिका, जयन्तरचिता न्यायकुसुमाञ्जलितर्कश्च ।" (पृ. ३७)

षड्दर्शनसमुच्चये **श्रीराजशेखरः**–" अक्षपादो गुरुस्तेषां तेन ते ह्याक्षपादकाः । उत्तमां संयमावस्थां प्राप्ता नग्ना भ्रमन्ति ते ॥ १५ ॥ अमीषां सर्वतीर्थेषु भरटा एव पूजकाः । शेषा नमस्कारकराः सोऽपि कार्यो न सन्मुखः ॥ ११२ ॥ " (पृ. ९–११) योगे वैशेषिके तन्त्रे प्रायः साधारणी क्रिया । आचार्यः शङ्कर इति नाम प्रागभिधापरम् ॥ २३ ॥ अमीषां तर्कशास्त्राणि षटसहस्राणि कन्दली । श्रीधराचार्यरचिता पशस्तकरभाष्यकम् ॥ २४ ॥ ....जीवस्यात्यन्तिको दुःखवियोगो मोक्ष इष्यते । यौगानां च तथैवोक्तः प्रायः साधर्मिका यतः ॥ २९ ॥ शिवेनोऽकरूपेण कणादस्य मुनेः पुरः । मतमेतत्प्रकथितं तत औलूक्यमुच्यते ॥ ३० ॥ अक्षपादेन ऋषिणा रचितत्वात्तु यौगिकम् । आक्षपादमिति ख्यातं प्रायस्तुल्यं मतद्वयम् ॥ ३१ ॥

साङ्ख्याभिमतभावाना–मिदानीमयमुच्यते ॥३३॥

इदानीं पुनरय समासः साङ्ख्याभिमतभावानामुच्यते, ' साङ्ख्याः '–कापिला इत्यर्थः, ' तदभिमताः '–तद्दर्शनाभीष्टा ये भावाः–पञ्चविंशतितत्त्वादयस्तेषां संक्षेपोऽतः परं कथ्यत इत्यर्थः ॥ ३३ ॥

तदेवाह—

साङ्ख्या निरीश्वरा केचित्, केचिदीश्वरदेवताः।
सर्वेषामपि तेषां स्यात्, तत्त्वानां पञ्चविंशतिः॥३४॥

---

( पृ. १२ ) इत्यादिकं यथोचितं विज्ञेयं विज्ञैः ।

" औलुक्यदर्शने परमेश्वरसाक्षात्कारश्च श्रवणमननभावनाभिर्भावनीयः, यदाह–" आगमेनानुमानेन ध्यानाभ्यासबलेन च। त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥ " इति सर्वदर्शनसंग्रहः पृ. १८६ । तत्त्वज्ञानाद्दुःखात्यन्तोच्छेदलक्षणं निश्रेयसमुभयत्र समानम्, तत्रापि क्रमदर्शकमाक्षपादे पारमर्षं सूत्रं–" दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः ॥ " इत्युक्तं सर्वदर्शनसंग्रहे पृ. २०६ ।

४४. अयमनन्तरश्च श्लोकः ' ज. ' ' पु ' प्रत्योः ' ३५ ' ' ३६ ' संख्याको दृश्यते, ' ३४ ' सङ्ख्याकस्तु ' एतेषां ' श्लोकः पठित इति विभाव्यतां पाठकैः ।

व्याख्या—केचित् साङ्ख्याः 'निरीश्वराः' ईश्वरं देवतया न मन्यन्ते-केवलमध्यात्मवे(वा)दिनः। केचित् पुन'रीश्वरदेवताः' महेश्वरं स्वशासनाधिष्ठातारमाहुः। सर्वेषामपि तेषां-केवलनित्यात्मवादिनामीश्वरदेवतानां च सर्वेषां साङ्ख्यमतानुसारिणां शासने 'पञ्चविंशति'स्तत्त्वानां स्यात्। तत्त्वं ह्यपवर्गसाधकं बीजमिति सर्ववादिसंवादः। यदुक्तम्—

[४५]पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः।
जटी मुण्डी शिखी वापि, मुच्यते नात्र संशयः॥ (६९)

तन्मते पञ्चविंशतिस्तत्त्वानीत्यर्थः॥ ३४॥

गुणत्रयमाह—

**सत्त्वं रजस्तमश्चेति, ज्ञेयं तावद्गुणत्रयम्।**
**प्रसाद[४६]तोषदैन्यादि-कार्यलिङ्गं क्रमेण तत्॥ ३५॥**

व्याख्या—'तावदि'ति प्रक्रमे, सत्त्वं रजस्तमश्चेति गुणत्रयं ज्ञेयम्। तद्गुणत्रयं 'क्रमेण' परिपाट्या 'प्रसादतोषदैन्यादि कार्यलिङ्गं,' गुणत्रयेणेदं लिङ्गत्रयं क्रमेण जन्यते। सत्त्वगुणेन प्रसादकार्यलिङ्गम्-वदननयनादिप्रसन्नता सत्त्वगुणेन स्यादित्यर्थः, रजो-

---

४५ सां. का ६४।

४६. 'तापः' इति बृहद्वृत्तौ पाठः। (पृ. ३७।१)।

गुणेन तोषः, स चानन्दपर्यायः, [४७]तल्लिङ्गानि स्फूर्त्यादीनि रजोगुणेनाभिव्यज्यन्त इत्यर्थः, तमोगुणेन च दैन्यं जन्यते, ' हा दैव ! नष्टोऽस्मि वञ्चितोऽस्मी'त्यादि वदनविच्छायतानेत्रसंकोचादिव्यङ्ग्यं दैन्यं तमोगुणलिङ्गमिति[४८] । दैन्यादीत्यादिशब्देन दुःखत्रयमाक्षिप्यते, तद्यथा–आध्यात्मिकं, आधिदैवतं, आधिभौतिकं चेति । तत्राध्यात्मिकं दुःखं द्विविध–शारीरं, मानसं च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं, मानसं कामक्रोधलोभमोहेर्ष्याविषयादर्शननिबन्धनम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं दुःखं द्वेधा–आधिभौतिकं, आधिदैवकं चेति । तत्राधिभौतिकं मानुषपशुमृगपक्षिसरीसृपस्थावरनिर्मितम्, आधिदैवकं यक्षराक्षसग्रहाद्यावेशहेतुकमिति ॥ ३५ ॥

---

४७. बृहद्वृत्तौ तु–"तापशोषभेदचलचित्ततास्तम्भोद्वेगाः कार्यं रजसो लिङ्गम्" इत्यालिखितम्। (पृ. ३९।२) ४८. "सत्त्वादिभिश्च परस्परोपकारिभिस्त्रिभिरपि गुणैः सर्वं जगद्व्याप्तं विद्यते परमूर्ध्वलोके प्रायो देवेषु सत्त्वस्य बहुलता, अधोलोके तिर्यक्षु नारकेषु च तमोबहुलता, नरेषु रजोबहुलता, यद्दुःखप्राया मनुष्या भवन्ति, यदुक्तम्–" ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः । मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ( साङ्ख्यकारिका ५४ ) अत्र 'ब्रह्मादिस्तम्बपर्यन्त' इति ब्रह्मादिपिशाचान्तोऽष्टविधः सर्ग," इति द्रष्टव्यं बृहद्वृत्तितः । ( पृ. ३९।२ )

१. °धमोहे° अं. पु. ।

अनेन दुःखत्रयेणाभिहतस्य प्राणिनस्तत्त्वजिज्ञासोत्पद्यतेऽत-स्तान्येव तत्त्वान्याह—

[४८]एतेषां या समावस्था, सा प्रकृतिः किलोच्यते ।
प्रधानाव्यक्तशब्दाभ्यां, वाच्या नित्यस्वरूपिका ॥३६॥

व्याख्या-' एतेषां ' सांख्यानां प्रकृतिः प्रीत्यप्रीतिविषादात्मकानां लाघवोपष्टम्भगौरवधर्माणां परस्परोपकारिणां सत्त्वरजस्तमसां त्रयाणामपि गुणानां या समावस्था समतयावस्थितिः सा किल प्रकृतिरुच्यते, किलेत्याप्तप्रवादे, सा प्रकृतिः कथ्यते । अन्यच्च सा प्रधानाव्यक्तशब्दाभ्यां वाच्या प्रधानशब्देनाव्यक्तशब्देन च प्रकृतिराख्यायते शास्त्रे, प्रकृतिः प्रधानमव्यक्तं चेति पर्यायान्तरमित्यर्थः। तथा नित्यस्वरूपिका शाश्वतभावतया प्रसिद्धेत्यर्थः । उच्यते च नित्या नानापुरुषाश्रया च तद्दर्शने प्रकृतिर्यदाह–
"[४९]तस्मान्न बध्यते नापि मुच्यते, नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च, नानाश्रया प्रकृतिः ॥ " (२०) इति ॥ ३६ ॥

[५०]दर्शनस्वरूपमाह—

ततः संजायते बुद्धि-र्महानिति यकोच्यते ।
अहङ्कारस्ततोऽपि स्यात् , तस्मात् षोडशको गणः॥३७॥

---

४८ अयं श्लोकोऽनेनैव क्रमेण मुद्रितो गुणरत्नीयवृत्त्यादर्शेऽपि विलोक्यते ।

४९. सां का ६२ इति स्याद्वादमञ्जर्यां पृ. १२० । ( पूना )

५०. " प्रकृत्यात्मसंयोगात्सृष्टिर्जायते, अतः सृष्टिक्रममेवाह "त्यवचूर्णिका बृहद्वृत्ता। ( पृ ४४।१)

व्याख्या–ततो गुणत्रयाभिघाताद्[+] बुद्धिः सजायते, यका बुद्धिर्महानिति उच्यते, महच्छब्देन[×] कीर्त्यते। 'एवमेतन्नान्यथा,' 'गौरेवायं नाश्वः,' 'स्थाणुरेष नायं पुरुषः' इत्येवं निश्चयेन पदार्थप्रतिपत्तिहेतुर्योऽध्यवसायः सा बुद्धिरिति। तस्यास्त्वष्टौ रूपाणि तद्दर्शनविश्रुतानि, यदाह—"[५१]धर्मज्ञानवैराग्यैश्वर्यरूपाणि चत्वारि सात्त्विकानि, अधर्मादीनि तु तत्प्रतिपक्षभूतानि चत्वारि तामसानीत्यष्टौ"। ततो बुद्धेरहङ्कारः, स चाभिमानात्मकः, यथा–'अहं शब्दे' 'अहं रूपे' 'अहं रसे' 'अहं स्पर्शे' 'अहं गन्धे' 'अहं स्वामी' 'अहमीश्वरो' 'ऽसौ मया हतः' 'अहं त्वां हनिष्यामी'त्यादि प्रत्ययरूपः। तस्मादहङ्कारात् षोडशको गणो 'जायत' इत्यध्याहारोऽस्ति भवतीत्यादिवत्[५२]। पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, एकादशं मनः, पञ्च [१]तन्मात्राणि च षोडशको गणः। तथा मा(वा)हेश्वरकृष्णः—[५३]

+ त्रयाद् या बुद्धिः ध पु.। × महाशब्देन ध.।

५१ पश्यत स्या० म पृ १२१ तमम्।

५२ तथा चोक्तम्-"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः। तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि॥ (सां. का. २२) इति सर्वदर्शनसङ्ग्रहे पृ. ३१९ (गायकवाडसीरीझ-वडोदरा)। १ भूतानि ज.।

५३ सां. का ३, स्या० मं० (पृ. १२१)

" मूलप्रकृतिरविकृतिः, महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो, न प्रकृतिर्न विकृतिः पुरुषः ॥ " (२१) ॥ इति ॥ ॥ ३७ ॥

षोडशकगणमेवाह—

स्पर्शनं रसनं घ्राणं, चक्षुः श्रोत्रं च पञ्चमम् ।
पञ्च बुद्धीन्द्रियाण्याहु-स्तथा कर्मेन्द्रियाणि च ॥३८॥

पायूपस्थवचःपाणि-पादाख्यानि मनस्तथा ।
अन्यानि पञ्च रूपाणि, तन्मात्राणि च षोडश ॥३९॥
युग्मम् ॥

व्याख्या-पञ्च बुद्धीन्द्रियाणीति सम्बन्धः । स्पर्शनं त्वगिन्द्रियं, रसनं जिह्वा, घ्राणं नासिका, चक्षुः नेत्रं, पञ्चमं च श्रोत्रं-कर्ण इति, एतानि पञ्च बुद्धिप्रधानानि-बुद्धिसहचराण्येव ज्ञानं जनयन्तीति कृत्वा बुद्धीन्द्रियाण्याहुः-कथयन्ति तन्मतीया इति । तथा कर्मेन्द्रियाणि चेति, तथेति पूर्वोद्दिष्टां पञ्चसङ्ख्यामात्रामपि परामृशति, तान्येवाह-पायूपस्थवचःपाणिपादाख्यानीति, पायुरपानं, उपस्थः प्रजननं, वचो वाक्यं, पाणिर्हस्तः, पादश्चरणः, तदारूपानि पञ्च कर्मेन्द्रियाणि-कर्मक्रियाव्यापारसाधनानीन्द्रियाणीति

^ °पादि-तन्मात्राणीति षो° ध । ÷ °त्राणि परा° ज ।

कर्मेन्द्रियाणि। तथा मनः, एकादशं [54]मन इन्द्रियमित्यर्थः। अन्यानि पञ्च रूपाणि तन्मात्राणि चेति–रूपरसगन्धशब्दस्पर्शाख्यानि तन्मात्राणीति षोडश ज्ञेयाः॥ ३८–३९॥

पञ्च तन्मात्रेभ्यश्च पञ्चभूतोत्पत्तिमाह—

रूपात्तेजो रसादापो, गन्धाद्भूमिः स्वरान्नभः।
स्पर्शाद्वायुस्तथा चैवं, पञ्चभ्यो भूतपञ्चकम्॥ ४०॥

व्याख्या–पञ्चभ्य इति पञ्च तन्मात्रेभ्यो भूतपञ्चकमिति सम्बन्धः। रूपतन्मात्रात्तेजः, रसतन्मात्रादापः, गन्धतन्मात्राद्भूमिः, स्वरतन्मात्रान्नभः–आकाशं, स्पर्शतन्मात्राद्वायुः, एवं पञ्चतन्मात्रेभ्यः पञ्चभूतान्युत्पद्यन्ते। असाधारणैकगुणकथनमिदं, उत्पत्तिश्च–शब्दतन्मात्रादाकाशं शब्दगुणं, शब्दो ह्यम्बरगुण इति, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुण इति, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणमिति, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुण इति, शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्रात् पृथिवी शब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायते, इति ÷पञ्चभ्यो भूतपञ्चकमित्यर्थः। ४०॥

---

५४. "मनो हि बुद्धीन्द्रियमध्ये बुद्धीन्द्रिय भवति कर्मेन्द्रियमध्ये कर्मेन्द्रियम्, तच्च तत्त्वार्थम(र्था)न्तरेणापि सकल्पवृत्ति।" (बृहद्वृत्तिः पृ. ४०)

१ °स्तथैवं च, पं ध.। ÷ पञ्चभ्यः पञ्चभूतकमि° पु. जं.।

प्रकृतिविस्तरमेवोपसंहरन्नाह—

**एवं चतुर्विंशतितत्त्वरूपं, निवेदितं साङ्ख्यमते प्रधानम् ।**
**[55]अन्यश्च कर्त्ता विगुणश्च भोक्ता, तत्त्वं पुमान्नित्यचिदभ्युपेतः ॥ ४१ ॥**

व्याख्या–एवं पूर्वोक्तप्रकारेण साङ्ख्यमते चतुर्विंशतितत्त्वरूपं प्रधानं निवेदितम् । प्रकृतिर्महानहङ्कारश्चेति त्रयम्, पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनश्चैकं, पञ्च तन्मात्राणि, पञ्च भूतानि चेति चतुर्विंशतिस्तत्त्वानि रूपं यस्येत्येवंविधा प्रकृतिः कथितेत्यर्थः । पञ्चविंशतितमं तत्त्वमाह–अन्यश्चेति, अन्यः कर्त्ता, न तु पुरुषः, प्रकृतेरेव संसरणादिधर्मत्वात्, यदुक्तं—

[56]"प्रकृतिः करोति प्रकृतिर्बध्यते, प्रकृतिर्मुच्यते"

अथवोच्यते—"पुरुषोऽबद्धः, पुरुषो मुक्तः, पुरुषस्तु"

"अमूर्त्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः ।
अकर्त्ता निर्गुणः सूक्ष्म आत्मा कापिलदर्शने ॥" (२२)[57]

---

५५ "अन्यस्त्वकर्त्ता" इति बृहद्वृत्तौ पाठः । पृ ४१/१) व्याख्या चैवं–'प्रकृतेश्चतुर्विंशतितत्त्वरूपाया 'अन्यस्तु'–पृथग्भूतः पुनरकर्त्ते'ति । (पृ. ४२/१)

÷ 'णस्तु भो' ध ।

५६. "तस्मान्न बध्यते नापि मुच्यते, नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ १ ॥" ( सां. का. ६२ ) इति स्याद्वादमञ्जर्यां पृ. १२० ।

५७. स्या॰ मं॰ पृ १२२ ।

पुरुषगुणानाह–त्रिगुण इति, सत्त्वरजस्तमोरूपगुणत्रयविकल तथा भोक्ता भोगी, एवम्प्रकारः पुमांस्तत्त्वं–पञ्चविंशतितमं तत्त्व मित्यर्थः, तथा नित्यचिदभ्युपेतः नित्या यासौ चिच्चैतन्यशक्ति स्तयाऽभ्युपेतः सहितः । आत्मा हि स्वं बुद्धेरव्यतिरिक्तमभिमन्यते सुखदुःखादयश्च विषया इन्द्रियद्वारेण बुद्धौ संक्रामन्ति, बुद्धिश्चो भयमुखदर्पणाकारा, ततस्तस्यां चैतन्यशक्तिः प्रतिबिम्बते, तत सुख्यहं दुःख्यहमित्युपचर्यते । आह च पतञ्जलिः—

"शुद्धोऽपि पुरुषः प्रत्ययं[58] बौद्धमनुपश्यति, तमनुपश्यन्[1]नतदात्मापि तदात्मक इव प्रतिभासते" इति ॥

मुख्यतस्तु चिच्छक्तिर्विषयपरिच्छेदशून्या, बुद्धेरेव विषयपरिच्छेदस्वभावत्वात्, चिच्छक्तिसन्निधानाच्चाऽचेतनापि बुद्धिश्चेतनावतीवाऽवभासते । [59]वादमहार्णवोऽप्याह—

"बुद्धिदर्पणसंक्रान्तमर्थप्रतिबिम्बकं द्वितीयदर्पणकल्पे ×पुंस्यध्यारोहति, तदेव भोक्तृत्वमस्य, [60]न तु विकारापत्तिः" इति ।

---

५८ 'प्रत्यहं' इति स्या० मं० पृ १२२ ।

१ "असुखदुःखादिमयोऽपि अबुद्धिप्रत्ययोऽपि" धटिप्पणी ।

५९. 'वेदान्तग्रन्थविशेषः,'...'सम्मतितर्कटीका वे'ति स्या० मं० टीप्पण १, पृ. १२३ । × पुंस्यध्यवरोहति ध. ।

६०. "न त्वात्मनो वि." इति स्या० मं० पृ. १२३ ।

तथा चासुरिः—

" विविक्तेदृक्परिणतौ, बुद्धौ भोगोऽस्य कथ्यते ।
प्रतिबिम्बोदयः स्वच्छे, यथा चंद्रमसोऽम्भसि ॥ " (२३)

विन्ध्यवासीत्वेवं भोगमाचष्टे—

" पुरुषोऽविकृतात्मैव, ÷स्वनिर्भासमचेतनम् ।
मनः करोति सान्निध्या-[६१]दुपाधेः स्फाटिकं यथा ॥ "(२४)

इति नित्यविज्ञानयुक्तः । बन्धमोक्षसंसाराश्च नित्येऽप्यात्मनि भृत्यगतयोर्जयपराजयोरिव तत्फलकोशलाभादिसम्बन्धेन स्वामिन्युपचारवदवाप्युपर्यन्त इत्यदोषः ॥ ४१ ॥

तत्त्वोपसंहारमाह—

**पञ्चविंशतितत्त्वानि, संख्ययैवं भवन्ति च ।**
**प्रधाननरयोश्चात्र, वृत्तिः पङ्ग्वन्धयोरिव ॥ ४२ ॥**

व्याख्या-पूर्वार्द्धं निगदसिद्धम् । अत्र सांख्यमते प्रधाननरयोः प्रकृतिपुरुषयोः, वृत्तिः वर्त्तनं पङ्ग्वन्धयोरिव, पङ्गुश्चरणविकलः, अन्धश्च नेत्रविकलः, यथा पङ्ग्वन्धौ संयुतावेव कार्यसाधनाय

÷ "स्वप्रतिभास तुल्यमित्यर्थः" घटिप्पणी ।

६१ 'उपाधिः स्फटिकं' इति स्या० मं० पृ. १२३ ।

प्रभवतो न पृथग्भूतौ प्रकृतिपुरुषयोरपि तथैव कार्यकर्तृत्वं प्रकृत्युपात्तं पुरुषो भुङ्क्त [६२] इत्यर्थः ॥४२॥

मोक्षप्रमाणं चाह—

**प्रकृतिवियोगो मोक्षः, पुरुषस्यान्तरज्ञानात् ।**
**मानत्रितयं च भवेत्, प्रत्यक्षं लैङ्गिकं शाब्दम् ॥४३॥**

व्याख्या–मोक्षः किमुच्यत इत्याह–पुरुषस्यात्मन आन्तरज्ञानात् त्रिविधबन्धविच्छेदात् प्रकृतिवियोगो यः स मोक्षः, प्रकृत्या सह वियोगे–विरहे सति पुरुषस्यापवर्ग इति । आन्तरज्ञानं च बन्धविच्छेदाद्भवति, बन्धश्च प्राकृतिकवैकारिकदाक्षिणभेदात् त्रिविधः, तद्यथा–प्रकृतावात्मज्ञानाद्ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः, ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीः पुरुषबुद्ध्योपासते

---

६२ "अन्धेन पङ्गुर्द्रष्टृत्वगुणेन स्वं स्कन्धमधिरोपितो नगरं प्राप्य नाटकादिकं पश्यन् गीतादिकं चेन्द्रियविषयमन्यमप्युपलभ्यमानो यथा मोदते तथा पंगुकल्पः शुद्धचैतन्यस्वरूपः पुरुषोऽप्यन्धकल्पां जडां प्रकृतिं सक्रियामाश्रितो बुद्ध्यध्यवसितं शब्दादिकं स्वात्मनि प्रतिबिम्बितं चेतयमानो मोदते मोदमानश्च प्रकृतिं सुखस्वभावां मोहान्मन्यमानः संसारमधिवसति ।" बृहद्वृत्तौ पृ. ४२।

१ °षस्य वतैतदन्तरज्ञानात् ध. । बृहद्वृत्तावपि चैवं मूलस्य (१–२) पाठः पृ. ४३/१। °यं चात्र, प्रत्य° ध. ।

तेषां वैकारिकः, इष्टापूर्ते दाक्षिणः—पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बद्ध्यत इति ।

[६३]"इष्टापूर्तं मन्यमाना वरिष्ठं, नान्यच्छ्रेयो येऽभिनन्दन्ति मूढाः ।
नाकस्य पृष्ठे ते सुकृतेन भूत्वा, इमं लोकं हीनतरं वा विशन्ति ॥"
(२५) इति वचनात् ।

इति त्रिविधबन्धविच्छेदात् परमब्रह्मज्ञानानुभवस्ततः प्रकृतिवियोगः पुरुषस्य, प्रकृतिपुरुषविवेकदर्शनाच्च निवृत्तायां प्रकृतौ पुरुषस्य स्वरूपावस्थानं मोक्ष इति श्लोकपूर्वार्द्धार्थः । मानत्रितयं च प्रमाणत्रयं च भवेत् स्यात् प्रत्यक्षं लैङ्गिकं शाब्दं, चकारः सर्वत्र सम्बध्यते, प्रत्यक्षमिन्द्रियोपलभ्य लैङ्गिकमनुमानगम्यं शाब्दं चागमस्वरूपमिति [६४]प्रमाणत्रयम् ॥४३॥

---

६३ वृत्तमिद स्या० मं० पृ १२६ । टिप्पण्या चास्य स्थल 'मु. उ १-२-१०' सूचितम् ( परिशिष्ट २. पृ ५५ ) । 'मु उ' इति मुण्डकोपनिषद् ज्ञेया ।

६४. अत्र बृहद्वृत्तिः—" प्रमाणस्य सामान्यलक्षणमुच्यते—'अर्थोपलब्धिहेतुः प्रमाण'मिति,....तत्र प्रत्यक्षलक्षणमाख्यायते—'श्रोत्रादिवृत्तिरविकल्पिका प्रत्यक्षमि'ति,....श्रोत्रादीनान्द्रियाणि, तेषां वृत्तिर्वर्तनं परिणाम इति यावत्, इन्द्रियाण्येव विषयाकारपरिणतानि प्रत्यक्षमिति हि तेषां सिद्धांतः, अविकल्पिका नामजात्यादिकल्पनारहिता शाब्दयनताव्यक्तवदव्याख्येयेति,

अथोपसंहारमाह—

## एवं सांख्यमतस्यापि, +समासः कथितोऽधुना ।

व्याख्या—एवं पूर्वोक्तप्रकारेण सांख्यमतस्यापि समासः संक्षेपः कथितः, अपिः समुच्चयार्थे, न केवलं बौद्ध–नैयायिकयोः संक्षेप उक्तः सांख्यमतस्याप्यधुना कथित[65] इति । सांख्य इति पुरुषनिमित्तेयं संज्ञा संखस्य इमे सांख्याः, तालव्यो वा 'श'कारः 'शंख'नामादिपुरुषः ।

ईश्वरकृष्णस्तु "*प्रतिनियताध्यवसायः श्रोतादिसमुत्थोऽध्यक्षम्" इति प्राह । अनुमानस्य त्विदं लक्षणम्—पूर्ववच्छेषवत्सामान्यतो दृष्टं चेति त्रिविधमनुमानमिति,....अथवा तल्लिङ्गलिङ्गिपूर्वकमित्येवानुमानलक्षणं साङ्ख्यैः समाख्यायते । शाब्दं त्वाप्तश्रुतिवचनम्, आप्ता रागद्वेषादिरहिता ब्रह्मसनत्कुमारादयः, श्रुतिर्वेदः, तेषां वचनं शाब्दम् " इति पृ. ४३।२ ।

+ 'मासो गदितोऽधु॰ घ ।

६५ सांख्यमतस्यापि किञ्चिदनुक्तमुच्यते बृहद्वृत्तितः—"अथादौ सांख्यमतप्रपन्नानां परिज्ञानाय लिङ्गादिकं निगद्यते, त्रिदण्डा एकदण्डा वा कौपीनवसना धातुरक्ताम्बराः शिखावन्तो जटिनः क्षुरमुण्डा मृगचर्मासना द्विजगृहाशनाः पञ्चग्रासीपरा वा द्वादशाक्षरजापिनः परिव्राजकादयः, तद्भक्ता वन्दमाना 'ओं

* "प्रतिविषयाध्यवसायो दृष्ट" इति (सां॰ का॰ ५) प्रमाणमीमांसायाम् पृ. ३९ ।

नमो नारायणाये'ति वदन्ति, ते तु 'नारायणाय नमः' इति प्राहुः, तेषां महाभारते वींटेति ख्याता दारवी मुखवस्त्रिका मुखनिःश्वासनिरोधिका भूतानां दयानिमित्तं भवति, ते च जलजीवदयार्थं स्वयं गलनकं धारयन्ति, भक्तानां चोपदिशन्ति—" षट्त्रिंशदङ्गुलायामं विंशत्यङ्गुलविस्तृतम् । दृढं गलनकं कुर्याद् भूयो जीवान्विशोधयेत् ॥ १ ॥ म्रियन्ते मिष्टतोयेन पूतराः क्षारसंभवाः । क्षारतोयेन तु परे न कुर्यात्संकरं ततः ॥ २ ॥ लूतास्यतन्तुगलिते ये बिन्दौ सन्ति जन्तवः । सूक्ष्मा भ्रमरमानास्ते नैव मान्ति त्रिविष्टपे ॥ ३ ॥ " इति गलनकविचारो मीमांसायाम्, सांख्याः केचिदीश्वरदेवा अपरे च निरीश्वराः, ये च निरीश्वरास्तेषां नारायणो देवः, तेषामाचार्या विष्णुप्रतिष्ठाकारकाश्चैतन्यप्रमृति-शब्दैरभिधीयन्ते, तेषां मतवक्तारः कपिलासुरिपञ्चशिखमार्गवोट्टकादयः, ततः सांख्याः कापिला इत्यादिनामभिरभिधीयन्ते,तथा कपिलस्य परमर्षिरिति द्वितीयं नाम तेन पारमर्षा इत्यपि नाम ज्ञातव्यम्, वाराणस्यां तेषां प्राचुर्यम्, बहवो मासोपवासिकाः, ब्राह्मणा आर्चिमार्गविरुद्धधूममार्गानुगामिनः, सांख्यास्त्वर्चिमार्गानुगाः, तत एव ब्राह्मणा वेदप्रिया यज्ञमार्गानुगाः, सांख्यास्तु हिंसाढ्यवेदविरता अध्यात्मवादिनः, ते च स्वमतस्य महिमानमेवमामनन्ति, तदुक्तं माटरप्रान्ते—"हस पिब लल स्वाद मोद नित्यं भुंक्ष्व च भोगान्यथाभिकामम् । यदि विदितं ते कपिलमतं तत्प्राप्स्यसि मोक्षसौख्यमचिरेण ॥१॥" शास्त्रान्तरेप्युक्तम्-" पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः। शिखी मुण्डी जटी वापि मुच्यते नात्र संशयः ॥२॥" (पृ. ३८–३९।१) सर्वोऽप्ययं विचारो मीलति राजशेखरीयषड्दर्शने सांख्यमतेन सह।" (पृ. ४–६ )

अथ क्रमायातं जैनमतोद्देशमाह—

जैनदर्शनसंक्षेपः, कथ्यते सुविचारवान् ॥ ४४ ॥

अधुनेत्युत्तरार्द्धेन वा संबध्यतेऽधुना—इदानीं जैनदर्शन-संक्षेपः कथ्यते। कथंभूत इति? सुविचारवान् सुष्ठु शोभनो

---

तथा च—" चिच्छक्तिर्विषयपरिच्छेदशून्या नार्थं जानाति, बुद्धिश्च जडा न चेतयते, सन्निधानात्तयोरन्यथा प्रतिभासनम्, प्रकृत्यात्मसंयोगात्सृष्टिरुप-जायते, प्रकृतिविकारस्वरूपं कर्म, तथा त्रैगुण्यरूपं सामान्यम्, प्रमाण-विषयस्तात्विक इति, प्रमाणस्य च फलमित्थं—पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं तु फलमिति, तथा कारणे कार्यं सदेवोत्पद्यतेऽसदका(क)रणादिभ्यो हेतुभ्यः, तदुक्तम् ( सांख्यकारिका ९ )—" असदका(+क)रणादुपादानग्रहणात्सर्वसंभवाभावात्। शक्तस्य शक्यका(क)रणात्कारणभावाच्च सत्कार्यम्॥१॥" इति, तथा द्रव्याण्येव केवलानि सन्ति, न पुनरुत्पत्तिविपत्तिधर्माणः पर्यायाः केऽपि, आविर्भावतिरोभाव-मात्रत्वात्तेषामिति, सांख्यानां तर्कग्रन्थाः षष्टितन्त्रोद्धाररूपं, माठरभाष्यं, सांख्य-सप्ततिनामकं, तत्त्वकौमुदी, गौडपादम्, आत्रेयतन्त्रं चेत्यादयः।" इति पृ. ४३/२, ४४/१ )

---

+ पश्यत सर्वदर्शनसंग्रहं पृ. १२५ ( वडोदा )

विचारोऽर्थोऽस्यातीति मत्वर्थीये वतुः, 'सुविचारवानि'ति साभिप्रायं पदम् । अपरदर्शनानि हि—

[९६]'पुराणं मानवो धर्मः, सांगो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः ॥ (२६)[९७]

इत्याद्युक्त्वा न विचारपदवीमाद्रियन्ते । जैनस्त्वाह—

" अस्ति वक्तव्यता काचित्, तेनेदं न विचार्यते ।
निर्दोषं काञ्चनं चेत् स्यात्, परीक्षाया बिभेति किम् ॥"(२७)[९७]

इति युक्तियुक्तविचारपरम्परापरिचयपथपथिकत्वेन जैनो युक्तिमार्गमेवावगाहते, न च [९८]पारम्पर्यादिपक्षपातेन युक्तिमुल्लङ्घयति परमार्हतः, उक्तं च—

'पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु ।
युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः ॥' (२८)[९७]

इत्यादि हेतुहेतिशतनिरस्तविपक्षप्रसरत्वेन सुविचारवानित्यसाधारणं विशेषणं ज्ञेयमिति ॥ ४४ ॥

---

९६. विचारित चेदं पद्यं तत्त्वसंग्रहे श्लो० ३५८४ पृ ९११ ।

९७ श्लोका अप्येतानि वृत्तान्युद्धृतानि, षड्० बृ० पृ. ४४/१ ।

९८. ये केचिदद्यतनीयाः परम्पराव्याजेन शीतस्पर्शादिविषये युक्तिग्रन्थपरावर्तनकरणादौ कदाग्रहा जातास्ते विचारयन्त्विदं स्वात्मपारम्पर्यादिपक्षपातं वर्जयन्तु च, यतो ग्रन्थकारा इमे अनुरोधयन्ति यत्–"जैनो युक्तियुक्तविचारपरम्परापरिचयपथपथिकत्वेन युक्तिमार्गमेवावगाहते, न च पारम्पर्यादिपक्षपातेनागमोक्तां युक्तिमुल्लङ्घयती"ति ।

तदेवाह—

जिनेन्द्रो देवता तत्र, रागद्वेषविवर्जितः ।
हतमोहमहामल्लः, केवलज्ञानदर्शनः ॥ ४५ ॥

सुरासुरेन्द्रसम्पूज्यः, सद्भूतार्थोपदेशकः× ।
कृत्स्नकर्मक्षयं कृत्वा, सम्प्राप्तः परमं पदम् ॥ ४६ ॥

युग्मम् ॥

व्याख्या—तत्र तस्मिन् जैनमते जिनेन्द्रो देवता कृत्स्नकर्मक्षयं कृत्वा परमं पदं सम्प्राप्त इति सम्बन्धः । 'जिनेन्द्र' इति—जयन्ति रागादीनिति जिनाः सामान्यकेवलिनस्तेषामिन्द्रः स्वामी, तादृशाऽसदृशचतुस्त्रिंशदतिशयसंपन्महितो जिनेन्द्रो देवता दर्शनप्रवर्त्तक आदिपुरुष. । एष कीदृक् सन् शिवं प्राप्त इति परासाधारणानि विशेषणान्याह—रागद्वेषविवर्जित इति, 'रागः' सांसारिकस्नेहोऽनुग्रहलक्षणः, 'द्वेषो' वैराद्यनुबंधानिग्रहलक्षणः, ताभ्यां विवर्जितो रहितः, एतावेव दुर्जयौ दुरन्तभवसम्पात*हेतुकतया च मुक्तिप्रतिरोधकौ समये प्रसिद्धौ । यदाह—

× 'तार्थप्रकाशक । घ एव च बृहद्वृत्तौ पृ ४५।१ ।

* 'सन्तापहे' ज: ।

"[६९]को दुक्खं पाविज्जा, कस्स व सुक्खेहिं विम्हओ हुज्जा ।
को य न लभिज्ज मुक्खं, रागद्दोसा जइ न हुज्जा ॥ (२९) इति

तथा हतमोहमहामल्लः, मोहनीयकर्मोदयाद्धिसात्मकशास्त्रेभ्योऽपि मुक्तिकांक्षणादिव्यामोहो मोहः, स एव दुर्जयत्वान्महामल्ल इव महामल्लः, हतो मोहमहामल्लो येनेति स तथा। रागद्वेषमोहसद्भावादेव न चान्यतीर्थाधिष्ठातारो मुक्त्यङ्गतया प्रतिभासन्ते, तत्सद्भावश्च तेषु सुज्ञेय एव। यदुक्तम्—

"[७०]रागोऽङ्गनासङ्गमनाऽनुमेयो, द्वेषो द्विषद्दारणहेतिगम्यः ।
मोहः कुवृत्तागमदोषसाध्यो,नो यस्य देवस्य स चैवमर्हन् ॥" (३०)

इति रागद्वेषमोहरहितो भगवान्। तथा केवलज्ञानदर्शनः, धव-खदिर-पलासादिव्यक्तिविशेषाववोधो ज्ञानम्, वनमिति सामान्याववोधो दर्शनम्, केवलशब्दश्चोभयत्र सम्बध्यते, 'केवलं' इन्द्रियादिज्ञानानपेक्षं ज्ञानं दर्शनं च यस्येति। केवलज्ञानकेवलदर्शनात्मको हि भगवान् करतलकलितविमलमुक्ताफलवद् द्रव्यपर्यायविशुद्धमखिलमिदमनवरतं जगत्स्वरूपं पश्यतीति केवलज्ञानदर्शन इति पदं साभिप्रायम्। छद्मस्थस्य हि प्रथमं दर्शनमुत्पद्यते, ततो ज्ञानम्, केवलिनस्त्वादौ ज्ञानं ततो दर्शनमिति। तथा सुरासुरेन्द्रसम्पूज्यः, सेवाविधानसावधाननिरन्तरढौकमानदासा-

६९ एते पद्ये ८० ,०अपि। पृ. ४५।

तदेवाह—

जिनेन्द्रो देवता तत्र, रागद्वेषविवर्जितः ।
हतमोहमहामल्लः, केवलज्ञानदर्शनः ॥ ४५ ॥

सुरासुरेन्द्रसम्पूज्यः, सद्भूतार्थोपदेशकः[×] ।
कृत्स्नकर्मक्षयं कृत्वा, सम्प्राप्तः परमं पदम् ॥ ४६ ॥

युग्मम् ॥

व्याख्या—तत्र तस्मिन् जैनमते जिनेन्द्रो देवता कृत्स्नकर्मक्षयं कृत्वा परमं पदं सम्प्राप्त इति सम्बन्धः। 'जिनेन्द्र' इति—जयन्ति रागादीनिति जिनाः सामान्यकेवलिनस्तेषामिन्द्रः स्वामी, तादृशाऽसदृशचतुस्त्रिंशदतिशयसंपन्महितो जिनेन्द्रो देवता दर्शनप्रवर्त्तक आदिपुरुषः। एष कीदृक् सन् शिवं प्राप्त इति परासाधारणानि विशेषणान्याह—रागद्वेषविवर्जित इति; 'रागः' सांसारिकस्नेहोऽनुग्रहलक्षणः, 'द्वेषो' वैराद्यनुबंधानिग्रहलक्षणः, ताभ्यां विवर्जितो रहितः, एतावेव दुर्जयौ दुरन्तभवसम्पातहेतुकतया[*] च मुक्तिप्रतिरोधकौ समये प्रसिद्धौ। यदाह—

× 'तार्थप्रकाशकः' घ. एवं च वृहद्वृत्तौ पृ. ४५।१।

* 'सन्तापहे' ज.।

"[६९]को दुक्खं पाविज्जा, कस्स व सुक्खेहि विम्हओ हुज्जा ।
को य न लभिज्ज मुक्खं, रागद्दोसा जइ न हुज्जा ॥ (२९) इति

तथा हतमोहमहामल्लः, मोहनीयकर्मोदयाद्धिंसात्मकशास्त्रेभ्योऽपि मुक्तिकांक्षणादिव्यामोहो मोहः, स एव दुर्जयत्वान्महामल्ल इव महामल्लः, हतो मोहमहामल्लो येनेति स तथा। रागद्वेषमोहसद्भावादेव न चान्यवीर्याधिष्ठातारो मुक्त्यङ्गतया प्रतिभासन्ते, तत्सद्भावश्च तेषु सुज्ञेय एव। यदुक्तम्—

"[६९]रागोऽङ्गनासङ्गमनाऽनुमेयो, द्वेषो द्विपद्दारणहेतिगम्यः ।
मोहः कुवृत्तागमदोषसाध्यो,'नो यस्य देवस्य स चैवमर्हन् ॥" (३०)

इति रागद्वेषमोहरहितो भगवान्। तथा केवलज्ञानदर्शनः, धव-खदिर-पलाशादिव्यक्तिविशेषाववोधो ज्ञानम्, वनमिति सामान्याववोधो दर्शनम्, केवलशब्दश्चोभयत्र सम्बध्यते, 'केवलं' इन्द्रियादिविज्ञानानपेक्षं ज्ञानं दर्शनं च यस्येति। केवलज्ञानकेवलदर्शनात्मको हि भगवान् करतलकलितविमलमुक्ताफलवद् द्रव्यपर्यायविशुद्धमखिलमिदमनवरतं जगत्स्वरूपं पश्यतीति केवलज्ञानदर्शन इति पदं साभिप्रायम्। छद्मस्थस्य हि प्रथमं दर्शनमुत्पद्यते, ततो ज्ञानम्, केवलिनस्त्वादौ ज्ञानं ततो दर्शनमिति। तथा सुरासुरेन्द्रसम्पूज्यः, सेवाविधानसावधाननिरन्तरढौकमानदासा-

६९ एते पद्ये ८० ८० अवि। पृ. ४५।

समानदेवदानवनायकवन्दनीयाः, तादृशैरपि पूज्यस्य मानवतिर्यक्खे-[×]चरकिन्नरनिकरसंसेव्यत्वमानुषङ्गिकमिति ।

तथा सद्भूतार्थोपदेशकः, सद्भूतार्थान् द्रव्यपर्यायरूपान् नित्यानित्यसामान्यविशेषसदसदभिलाप्यानभिलाप्याद्यनन्तधर्मात्मकान् पदार्थाननुपदिशति यः स इति । [७०]उत्पादव्ययध्रौव्यात्मकं च सदित्यभिमन्यमानो जैन एकान्तनित्यपक्षमेकान्तानित्यपक्षं चेत्थं विघटयति, तथाहि — वस्तुनस्तावदर्थक्रियाकारित्वं लक्षणं, तच्च नित्यैकान्ते न घटते, अप्रच्युतानुत्पन्नस्थिरैकरूपो हि नित्यः, स च क्रमेणार्थक्रियां कुर्वीताऽक्रमेण वा ? अन्योन्यव्यतिरिक्तधर्माणामर्थानां प्रकारान्तरेणोत्पादाभावात्, तत्र न क्रमेण, स हि कालान्तरभाविनीः क्रियाः प्रथमक्रियाकाल एव प्रसह्य कुर्यात्, समर्थस्य कालक्षेपायोगात्, कालक्षेपिणो वाऽसामर्थ्यप्राप्तेः, समर्थोऽपि तत्तत्सहकारिसमवधाने तं तमर्थं करोतीति चेद्, न तर्हि तस्य सामर्थ्यम्, अपरसहकारिसापेक्षवृत्तित्वात्, सापेक्षमसमर्थमिति [७१]न्यायात्, 'न तेन सहकारिणोऽपेक्ष्यन्तेऽपि तु कार्यमेव सहकारिष्वसत्स्वभवत्तानपेक्षत' इति चेत्, तत् किं स भावोऽसमर्थः समर्थो वा ?

× °रसुरसंसे° पु. ध. ।

७० पश्यत तत्त्वार्थाधिगमसूत्रे अ. ५. सू २९ तमम् ।

७१. " हेमहंसगणि समुच्चितहेमचन्द्रव्याकरणस्यन्यायः २८ " इति स्या० मं० पृ. १० ( पूना ) टिप्पण्याम् ।

समर्थश्चेत् तर्हि सहकारिमुखमेक्षणदीनानि [७२] तान्यपेक्षते न पुनर्झटिति घटयति ? । ननु ' समर्थमपि बीजमिलाजलानिलादिसहकारिसहितमेवाङ्कुरं करोति, नान्यथा,' [×] तत्र किं तस्य सहकारिभिः किञ्चिदुपक्रियते न वा ? यदि नोपक्रियेत तदा सहकारिसन्निधानात् प्रागिव [७३] किं न सोऽर्थः क्रियायामुदास्ते ? ' उपक्रियेत ' चेत् स तर्हि तैरुपकारो भिन्नोऽभिन्नो वा क्रियत इति वाच्यम्, अभेदे स एव क्रियत इति लाभमिच्छतो मूलक्षतिरायाता, कृतकत्वेन तस्यानित्यत्वापत्तेः, भेदे सति कथं तस्योपकारः ? किं न सह्यविन्ध्यादेरपि ? ' तत्सम्बन्धात् तस्यायमि'ति चेत्, उपकार्योपकारयोः कः सम्बन्धो ? न तावत् संयोगो, द्रव्ययोरेव तस्य भावात्, अत्र तूपकार्यं द्रव्यं उपकारश्च क्रियेति न संयोगः, नापि समवायस्तस्यैकत्वाद् व्यापकत्वाच्च प्रत्यासत्तिविप्रकर्षाभावेन सर्वत्र तुल्यत्वाद् न नियतैः सम्बन्धिभिः सम्बन्धो युक्तः, [७४] नियतसम्बन्धे चाङ्गीक्रियमाणे

---

७२. तान्युपेक्षते ' इति स्या० मं० पृ. २० पाठः, परमशुद्धो भाति ।

× °स्य सहितस्य जं. ।

७३. " किं न तदाप्यर्थक्रियायामुदास्ते ? " इति स्या० मं० पृ. २० ।

७४. " नियतसम्बन्धिसम्बन्धे " इति स्या० मं० पृ. २१ ।

तत्कृत उपकारोऽस्य समवायस्याभ्युपगन्तव्यस्तथा च सत्युपकारस्य भेदाभेदकल्पना तदवस्थैव, उपकारस्य समवायादभेदे समवाय एव कृतः स्यात्, भेदे पुनरपि समवायस्य न नियतसम्बन्धिसम्बन्धत्वम्, तन्नैकान्तनित्यो भावः क्रमेणार्थक्रियां कुरुते । नाप्यक्रमेण, न ह्येको भावः सकलकालकलाभाविनीर्युगपत्सर्वाः क्रियाः करोतीति प्रातीतिकं, कुरुतां वा तथापि स द्वितीयक्षणे किं कुर्यात्? करणे वा क्रमपक्षभावी दोषः, अकरणे त्वर्थक्रियाकारित्वाभावादवस्तुत्वमसङ्गः। इत्येकान्तनित्यात् क्रमाक्रमाभ्यां व्याप्ताऽर्थक्रिया व्यापकानुपलब्धिबलाद्व्यापकनिवृत्तौ निवर्त्तमाना[७५] व्याप्यमर्थक्रियाकारित्वं निवर्त्तयति, अर्थक्रियाकारित्वं च निवर्त्तमानं स्वव्याप्यं सत्त्वं निवर्त्तयतीति नैकान्तनित्यपक्षो युक्तिक्षमः । एकान्ताऽनित्यपक्षोऽपि न कक्षीकरणार्हः। अनित्यो हि प्रतिक्षणविनाशी, स च न क्रमेणार्थक्रियासमर्थो देशकृतस्य कालकृतस्य च क्रमस्यैवाभावात्, क्रमो हि पौर्वापर्यं तच्च क्षणिकस्याऽसम्भवि, अवस्थितस्यैव* नानादेशकालव्याप्तिर्देशक्रमः कालक्रमश्चाभिधीयते, न चैकान्तविनाशिनि सास्ति, यदाहुः[७६]—

"यो यत्रैव स तत्रैव यो यदैव तदैव सः ।
न देशकालयोर्व्याप्ति-र्भावानामिह विद्यते ॥" (३१)

---

७५. 'स्वव्याप्य०" इति स्या० मं० पृ० २१।
* "य हि नाना° ध. एवमेव च स्या० मं० पृ २२।
७६. "आजीविकाः" इति स्या० मं० टिप्पण्याम् पृ. २२।

न च सन्तानापेक्षया पूर्वोत्तरक्षणानां क्रमः सम्भवति, सन्तानस्यावस्तुत्वात्, वस्तुत्वेऽपि तस्य यदि क्षणिकत्वं न तर्हि क्षणेभ्यः कश्चिद्विशेषः, अथाक्षणिकत्वं तर्हि समाप्तः क्षणभङ्गवादः। नाप्यक्रमेणार्थक्रिया क्षणिके सम्भवति, स ह्येको बीजपूरादिरूपादिक्षणो युगपदनेकान् रसादिक्षणान् जनयन्नेकेन स्वभावेन जनयेन्नानास्वभावैर्वा? यद्येकेन तदा तेषां रसादिक्षणानामेकत्वं स्यादेव[77] (क) स्वभावजन्यत्वात्, अथ 'नानास्वभावैर्जनयति किञ्चिद्रूपादिकमुपादानभावेन किञ्चिद्रसादिकं सहकारित्वेने'[78]ति, ते तर्हि स्वभावास्तस्यात्मभूता अनात्मभूता वा? अनात्मभूताश्चेत् स्वभावत्वहानिः, यद्यात्मभूतास्तर्हि तस्यानेकत्वमनेकस्वभावत्वात्, स्वभावानां वैकत्वं प्रसज्येत, तदव्यतिरिक्तत्वात् तेषां,तस्य चैकत्वात्। अथ 'य एवैकत्रोपादानभावः स एवान्यत्र सहकारिभाव इति न स्वभावभेद इष्यते' ताह नित्यस्यैकरूपस्य(स्यापि) क्रमेण नानाकार्यकारिणः स्वभावभेदः कार्यसाङ्कर्यं वा(च)कथमिष्यते क्षणिकवादिना? अथ 'नित्यमेक[स्व]रूपत्वादक्रमम्, अक्रमाच्च क्रमिणां नानाकार्याणां कथमुत्पत्तिः?' इति चेदहो स्वपक्षपक्षपाती देवानांप्रियो यः खलु स्वयमेकस्मान्निरंशाद्रूपादिक्षणलक्षणात् कारणाद्युगपदनेककारणसाध्यान्यनेककार्याण्यङ्गीकुर्वाणोऽपि परपक्षे नित्येऽपि

७७. "स्यादेकस्वभाव०" स्या० मं० पृ. २२।

७८ "°त्वेन' इति चेत्" स्या० मं० पृ. २२।

वस्तुनि क्रमेण नानाकार्यकरणेऽपि विरोधमुद्भावयति। तस्मात् क्षणिकस्यापि भावस्याक्रमेणार्थक्रिया दुर्घटा इत्यनित्यैकान्तादपि ७९ क्रमाक्रमयोर्निवृत्त्यैव व्याप्यार्थक्रियापि व्यावर्त्तते, तद्व्यावृत्तौ च× सत्त्वमपि व्यापकानुपलब्धिबलेनैव निवर्त्तेत इत्येकान्तानित्यवादोऽपि न रमणीयः।

स्याद्वादे तु पूर्वोत्तराकारपरिहारस्वीकारस्थितिलक्षणपरिणामेन भावानामर्थक्रियोपपत्तिरविरुद्धा। न चैकत्र वस्तुनि परस्परविरुद्ध-धर्माध्यासयोगादसन् स्याद्वाद इति वाच्यम्, नित्यपक्षानित्य-पक्षविलक्षणस्य कथञ्चित् सदसदात्मकस्य पक्षान्तरस्याङ्गीक्रियमाण-त्वात्, तथैव च सर्वैरनुभवादिति। तथा च पठन्ति—

"८०भागे सिंहो नरो भागे, योऽर्थो भागद्वयात्मकः।
तमभागं विभागेन नरसिंहं प्रचक्षते॥" (३२)इति

तथा सामान्यैकान्तं विशेषैकान्तं भिन्नौ सामान्यविशेषौ चेत्थं निरा-चष्टे। ८१ तथाहि—'विशेषाः सामान्याद्भिन्ना अभिन्ना वा? भिन्नाश्चे-

७९ "क्रमाक्रमयोर्व्यापकयोर्निवृत्त्यैव" स्या मं० पृ २३।

× ख स्वयमपि ज पु।

८०. स्या०मं०पृ. २३।

८१. अत्र स्याद्वादमञ्जरीतः किञ्चिल्लिख्यते— "एतच्च पक्षत्रयमपि किञ्चिच्चर्च्यते, तथाहि—संग्रहनयावलम्बिनो वादिनः प्रतिपादयन्ति 'सामान्यमेव तत्त्वम्, ततः पृथग्भूतानां विशेषाणामदर्शनात्, तथा

८२
न्मण्डूकजटाभारानुकाराः, अभिन्नाश्चेत् तदेव तत्स्वरूपवत्' इति सामान्यैकान्तः सामान्यैकान्तवादिनस्तु द्रव्यास्तिकनयानुपातिनो मीमांसकभेदा अद्वैतवादिनः सांख्याश्च। पर्यायनयान्वयिनस्तु भाषन्ते-'विविक्ताः क्षणक्षयिणो विशेषा एव परमार्थः[८३], ततो विष्वग्भूतस्य सामान्यस्याप्रतीयमानत्वात्, न हि गवादिव्यक्त्यनुभवकाले वर्णसंस्थानात्मकं व्यक्तिरूपमपहायान्यत् किञ्चिदेकमनुयायि प्रत्यक्षे प्रतिभासते, तादृशस्यानुभवाभावात्, तथा च पठन्ति—

सर्वमेकम्, अविशेषेण सदिति ज्ञानाभिधानानुवृत्तिलिङ्गानुमितसत्ताकत्वात्,... किञ्च, ये सामान्यात्पृथग्भूता अन्योऽन्यव्यावृत्त्यात्मका विशेषाः कल्प्यन्ते तेषु विशेषत्वं विद्यते न वा? नो चेद् निःस्वभावताप्रसङ्गः, स्वरूपस्यैवाभावात्, अस्ति चेत् तर्हि तदेव सामान्यम्, यतः समानानां भावः सामान्यम्, विशेषरूपतया च सर्वेषां तेषामविशेषेण प्रतीतिः सिद्धैव, अपि च विशेषाणां व्यावृत्तिप्रत्ययहेतुत्वं लक्षणम्, व्यावृत्तिप्रत्यय एव च विचार्यमाणो न घटते, व्यावृत्तिर्हि विवक्षितपदार्थे इतरपदार्थप्रतिषेधः,...स चाभावरूपत्वात्तुच्छः कथं प्रतीतिगोचरमञ्चति? खपुष्पवत्....किञ्च, अमी विशेषाः सामान्याद्भिन्ना अभिन्ना वा?" इत्यादिकं द्रष्टव्यम् पृ. १०७–१०८।

८२. "मण्डूके केशा न भवन्ति, तेन जटानामसंभवः इति" स्या०मं० टि. पृ. १०८।

८३ 'परमार्थतः' प्र०। स्या० मं० तु "परमार्थः"। पृ० १०८।

"एतासु[८४] पंचस्ववभासिनीषु[८५], प्रत्यक्षबोधे स्फुटमङ्गुलीषु।
साधारणं रूपमवेक्षते यः, शृङ्गं शिरस्यात्मन ईक्षते सः ॥" (३३)

'एकाकारपरामर्शप्रत्ययस्तु स्वहेतुदत्तशक्तिभ्यो व्यक्तिभ्य एवोत्पद्यते' इति न तेन सामान्यसाधनं न्याय्यं, किञ्च यदिदं सामान्यं परिकल्प्यते तदेकमनेकं वा? एकमपि सर्वगतमसर्वगतं वा? सर्वगतं चेत् किं न व्यक्त्यन्तरालेषूपलभ्यते? सर्वगतैकत्वाभ्युपगमे च तस्य यथा गोत्वसामान्यं गोव्यक्तीः क्रोडीकरोति एवं किं न घटपटादिव्यक्तीरपि, अविशेषात्? असर्वगतं चेद्विशेषरूपापत्तिरभ्युपगमबाधश्च, अथ 'अनेकं, गोत्वाऽश्वत्वघटत्वपटत्वादिभेदभिन्नत्वात्,' तर्हि विशेषा एव स्वीकृताः, अन्योन्यव्यावृत्तिहेतुत्वात्, न हि यद्गोत्वं तदश्वत्वात्मकमिति, अर्थक्रियाकारित्वं च वस्तुनो लक्षणम्, तच्च विशेषेष्वेव स्फुटं प्रतीयते, न हि सामान्येन काचिदर्थक्रिया क्रियते, तस्य निष्क्रियत्वात्, वाहदोहादिकास्वर्थक्रियासु[८६] विशेषाणामेवोपयोगात्, तथा—इदं सामान्यं विशेषेभ्यो भिन्नमभिन्नं वा? भिन्नं चेदवस्तु, विशेषविश्लेष(षे)णार्थक्रियाकारित्वाभावात्,[+]

८४. "अशोकादिरचितसामान्यदूषणादिकप्रसारितामन्ये" इति स्या०मं० टि पृ १०८।

८५ "स" स्या० मं० पृ. १०८

८६. "वाहः—शकटवाहनम्" इति स्या. मं टि पृ. १०९।

+"विश्लेषेणा०" स्या० मं० पृ० १०९। 'विश्लेषः—वियोगः" इति टिप्पण्याम्।

अभिन्नं चेद्विशेषा एव, तत् स्वरूपवदिति विशेषैकान्तवादः। नैगमनयानुगामिनस्त्वाहुः 'स्वतन्त्रौ सामान्यविशेषौ', तथैव प्रमाणेन प्रतीतत्वात्, तथा हि – 'सामान्यविशेषावत्यन्तभिन्नौ, विरुद्धधर्माध्यासितत्वाद्, यावेवं तावेवं, यथा पाथःपावकौ. तथा नैतौ, तस्मात् तथा। सामान्यं हि गोत्वादि सर्वगतं, तद्विपरीताश्च शबलशाबलेयादयो विशेषाः, ततः कथमेषामैक्यं युक्तं? 'न सामान्यात् पृथग् विशेषस्योपलम्भ' इति चेत्, कथं तर्हि तस्योपलम्भ? इति वाच्यम्, 'सामान्यव्याप्तस्ये'ति चेत्, न तर्हि स विशेषोपलम्भः, सामान्यस्यापि तेन ग्रहणात्, ततश्च तेन बोधेन विविक्तविशेषग्रहणाभावात्त-द्वाचकं ध्वनिं तत्साध्यं च व्यवहारं न प्रवर्त्तयेत् प्रमाता, न चैतदस्ति विशेषाभिधानव्यवहारयोः प्रवृत्तिदर्शनात्, तस्माद्विशेषमभिलपता तत्र व्यवहारं प्रवर्त्तयता तद्ग्राहको बोधो विविक्तोऽभ्युपगन्तव्यः, एवं सामान्यस्थाने विशेषशब्दं विशेषस्थाने च सामान्यशब्दं प्रयुञ्जानेन सामान्येऽपि तद्ग्राहको बोधो विविक्तोऽङ्गीकर्त्तव्यः, तस्मात् स्वस्वग्राहिणि ज्ञाने पृथक् प्रतिभासमानत्वाद् द्वावपीतरेतरविश्लिष्टौ, ततो न सामान्यविशेषात्मकत्वं वस्तुनो घटत इति स्वतन्त्रसामान्यविशेषवादः, स्वतन्त्रसामान्यविशेषदेशका नैगमनयानुरोधिनः

---

\+ °शेषाणामभावात् प. । × तद्बोधकं ज । * °त्मकं वस्तु° प. ।

[८७] काणादा अ(आ)क्षपादाश्च ।

तदेतत् पक्षत्रयमपि न क्षमते क्षोदं प्रमाणबाधितत्वात्, सामान्यविशेषोभयात्मकस्यैव वस्तुनो निर्विगानमनुभूयमानत्वात्, वस्तुनो हि लक्षणमर्थक्रियाकारित्वं, तच्चानेकान्तवाद एवाविकलं कलयन्ति परीक्षकाः, तथा हि – गौरित्युक्ते खुरककुदलाङ्गूलसास्नाविषाणाद्यवयवसम्पन्नं वस्तुरूपं सर्वव्यक्त्यनुयायि प्रतीयते, तदा महिष्यादिव्यावृत्तिरपि प्रतीयते, यत्रापि च 'शबला गौ'रित्युच्यते तत्रापि यथा विशेषप्रतिभासस्तथा गोत्वप्रतिभासोऽपि स्फुट एव, 'शबले'ति केवलविशेषोच्चारणेऽप्यर्थात् प्रकरणाद्वा गोत्वमनुवर्त्तते, अपि च शबलत्वमपि नानारूपं, तथा दर्शनात्, ततो वक्त्रा 'शबले'त्युक्ते क्रोडीकृतसकलशबलसामान्यं विवक्षितगोव्यक्तिगतमेव शबलत्वं व्यवस्थाप्यते, तदेवमाबालगोपालं प्रतीतिप्रसिद्धेऽपि वस्तुनः सामान्यविशेषात्मकत्वे तदुभयैकान्तवादः प्रलापमात्रम्। नहि क्वचित् कदाचित् केनचित् सामान्यं विशेषं विना कृतमनुभूयते, विशेषा वा तद्विनाकृताः, यदाहुः—

> [८८] द्रव्यं पर्यायवियुतं, पर्याया द्रव्यवर्जिताः ।
> क्व कदा केन किंरूपा, दृष्टा मानेन केन वा ॥ (३४) इति ॥

८७. स्या० मं० पृ. १०६ । ÷यथा गौ' स्या० मं० पृ. ११० ।

८८ स्या. मं. पृ. १८ । " एतदर्थिका गाथा सम्मतितर्के प्रथमकाण्डे दृश्यते ।
दव्व पज्जवविज्जुअ दव्वविउत्ता य पज्जवा नत्थि ॥ १२ ॥" इत्येतस्य टिप्पण्याम् ।

केवलं दुर्नयवलमभावितमबलमतिव्यामोहादेकमपलप्यान्यतर-द्व्यवस्थापयन्ति कुमतयः, सोऽयमन्धगजन्यायः[८९], येऽपि च तदेकान्त-पक्षोपनिपातिनः प्रागुक्ता दोषास्तेऽप्यनेकान्तवादमचण्डमुद्गरमहार-जर्जरितत्वाद् नोच्छ्वसितुमपि क्षमाः। स्वतन्त्रसामान्यविशेषवादिन-स्त्वेवं प्रतिक्षेप्याः—सामान्यं प्रतिव्यक्ति +कथञ्चिद्विभिन्नं, कथञ्चि-त्तदात्मकत्वात्, विसदृशपरिणामवत्, यथैव हि काचिद्व्यक्तिरुपल-भ्यमानाद्व्यक्त्यन्तराद्विशिष्टा विसदृशपरिणामदर्शनादवतिष्ठते तथा सदृशपरिणामात्मकसामान्यदर्शनात् समानेति, तेन समानो गौरयम्, सोऽनेन समान इति प्रतीतेः, न चास्य व्यक्तिस्वरूपादभिन्नत्वात् सामान्यरूपताव्याघातो, यतो रूपादीनामपि व्यक्तिस्वरूपादभिन्न-त्वमस्ति, न च तेषां गुणरूपताव्याघातः, कथञ्चिद्व्यतिरेकस्तु रूपादीनामिव सदृशपरिणामस्याप्यस्त्येव, पृथग्व्यपदेशादिभाक्त्वात्। विशेषा अपि नैकान्तेन सामान्यात् पृथग् भवितुमर्हन्ति, यतो यदि सामान्यं सर्वगतं सिद्धं भवेत्तदा वेषामसर्वगतत्वेन ततो विरुद्धधर्मा-ध्यासः स्यात्, न च तस्य तत्सिद्धं, प्रागुक्तयुक्त्या निराकृतत्वात्,

---

८९ " जन्मान्धैर्दशभिर्यथाक्रम पदचतुष्टयश्रोत्रद्वयशुण्डादन्तपुच्छरूपा गजा-वयवाः स्पृष्टाः, ततस्त अन्धाः स्वस्पृष्टरूप स्तम्भाद्याकारक पूर्णतया गजस्वरूप प्रति-पद्यमानास्तथैव स्थापयन्ति तदितरान्निषेधयन्ति तद्वत् " इति स्या० मं० टि पृ १११।

+ कथञ्चिद्भिन्नं ध.। कथञ्चिद्भिन्नं कथञ्चिदभिन्नं" स्या० मं० पृ. १११।

[९२] निर्विशेषं हि सामान्यं, भवेच्छशविषाणवत् ।
सामान्यरहितत्वेन, विशेषास्तद्वदेव हि ॥(३६) तथा–

एकान्तसत्त्वमेकान्तासत्त्वं चावार्त्तमेव, तथाहि – सर्वभावानां हि सदसदात्मकमेव स्वरूपं, एकान्तसत्त्वे वस्तुनो वैश्वरूप्यं स्यादेकान्तासत्त्वे च निःस्वभावता भावानां स्यात्, तस्मात् स्वरूपेण सत्त्वात् पररूपेण चासत्त्वात् सदसदात्मकं वस्तु सिद्धं, यदाह—

[९३] " सर्वमस्ति स्वरूपेण, पररूपेण नास्ति च ।
अन्यथा सर्वसत्त्वं स्यात्, स्वरूपस्याप्यसम्भवः॥ (३७) इति ।

ततश्चैकस्मिन् घटे सर्वेषां घटव्यतिरिक्तपदार्थानामभावरूपेण वृत्तेरनेकान्तात्मकत्वं घटस्य सूपपादम् । एवं चैकस्मिन्नर्थे ज्ञाते सर्वेषामर्थानां ज्ञानं, सर्वपदार्थपरिच्छेदमन्तरेण तन्निषेधात्मन एकस्य वस्तुनो विविक्ततया परिच्छेदासम्भवात् । आगमोऽप्येवमेव[×] व्यवस्थितः—

[९३]जे एगं जाणइ से सव्वं जाणइ,
जे सव्वं जाणइ से एगं जाणइ । तथा—

---

९२ "मीमांसाश्लोकवार्तिकसूत्र५आकृतिवादे श्लोकः १०" स्या मं. पृ. १०४।

÷ °वेत् खरवि° जं. ।

९३. प्र. मी. पृ. ११ ।

× °प्येवं व्य° ध. ।

६४
एको भावः सर्वथा येन दृष्ट, सर्वे भावाः सर्वथा तेन दृष्टाः।
सर्वे भावा सर्वथा येन दृष्टा, एको भावः सर्वथा तेन दृष्टः॥ (३८)

इति सुघटं सदसदनेकान्तात्मकं वस्तु। अनयैव भङ्ग्या 'स्यादस्ति' 'स्यान्नास्ति' 'स्यादवक्तव्या'दिसप्तभंगीविस्तरस्य जगत्पदार्थसार्थव्यापकत्वादभिलाप्यानभिलाप्यात्मकमभ्यूह्यमिति 'सद्भूतार्थोपदेशकं' इति।

कृत्स्नकर्मक्षयं कृत्वेति – 'कृत्स्नानि' सर्वाणि घात्यघात्यादीनि यानि कर्माणि जीवभोग्यवेद्यपुद्गलास्तेषां 'क्षयं' निर्जरणं विधाय परमं पदं – मोक्षपदं सम्प्राप्तः। अपरे हि सौगतादयो मोक्षमवाप्यापि तीर्थनिकारादिसम्भवे भूयो भवमवतरन्ति।

६४ (स्या. मं. पृ. ५) आचारांगसूत्रे प्र. श्रु. तृतीयाध्ययने चतुर्थोद्देशे सूत्र १२२। °त्मकं वस्तु अभ्यू° घ।

× °न्ति। अथ सप्तभङ्गीभेदा लिख्यन्ते चान्तराले–स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमो भङ्गः १। स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयः २। स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधि(निषेध)कल्पनया तृतीयः ३। स्यादव्यक्तमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थ ४। स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया (युगप-

९५
यदाहुः—

ज्ञानीनो धर्मतीर्थस्य, कर्त्तारः परमं पदम्।
गत्वाऽऽगच्छन्ति भूयोऽपि, भव(वं) तीर्थनिकारतः॥ (३९) इति।

न ते परमार्थतो मोक्षगतिभाजः, कर्मक्षयाभावात्। न हि तत्त्वतः कर्मक्षये पुनर्भवावतारः। यदुक्तम्—

९६
दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुर।
कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः॥ (४०) इति।

उक्तं च श्रीसिद्धसेनदिवाकरपादैरपि भूयो भवाभिगामुकानां प्रबलमोहविजृम्भितं, यथा—

---

द्विधिनिषेधकल्पनया च) पञ्चमः ५। स्यान्नास्त्येव स्यादव्यक्तमेवेति निषेधकल्पनया (युगपद्विधिनिषेधकल्पनया) च षष्ठः ६। (स्यादस्त्येव स्यान्नास्त्येव) स्यादवक्तव्यमेवेति क्रमाद् विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया (च) सप्तमः ७ इति *सप्तभङ्गीयम्। यदाहुः इत्यधिकं जं. प्रतौ।

९५. "आजीविकनयानुसारिणः।" स्या० मं० पृ. ४। "अजीवं निरात्मत्वमभ्युपगच्छन्तीत्याजीविका बौद्धाः।" इत्येतस्य टि. तत्रैव।

९६. तत्त्वार्थसूत्रे द्वि० विभागे दशमाध्यायेऽन्त्यकारिकाश्लो० ८, पृ. ३१९। (सिद्धसेनीया टीका दे० ला० मुद्रिता)

---

* सप्तभंगीयमालिखिता स्या० मं० पृ. १८१।

दग्धेन्धनः पुनरुपैति भवं प्रमथ्य, निर्वाणमप्यनवधारितभीरु(र)निष्टम्।
मुक्तः स्वयं कृतभवः परार्थशूर-स्त्वच्छासनप्रतिहतेष्विह मोहराज्यम्॥
(४१) इति।

अर्हंश्च भगवान् कर्मक्षयपूर्वमेव शिवपदं प्राप्त इति ॥४५-४६॥

तत्त्वान्याह—

जीवाजीवौ तथा पुण्यं, पापाश्रवसंवरौ ।
बन्धो ^विनिर्जरा मोक्षो, नव तत्त्वानि तन्मते ॥४७॥

व्याख्या—तन्मते जैनमते नव तत्त्वानि+ संभवन्तीति ज्ञेयम्। नामानि निगदसिद्धान्येव ॥४७॥

जीवाजीवपुण्यतत्त्वमेवाह—

तत्र ज्ञानादिधर्मेभ्यो, भिन्नाऽभिन्नो विवृत्तिमान्।
×कर्त्ता शुभाशुभं कर्म, भोक्ता कर्मफलं तथा ॥४८॥
चैतन्यलक्षणो जीवो, *यश्च तद्वैपरीत्यवान्।
अजीवः स समाख्यातः, पुण्यं सत्कर्मपुद्गलाः ॥४९॥

युग्मम् ॥

---

^ °र्जरामोक्षौ, नव° घ०। बृ० वृ० पृ ५५। + °नि भव° जं. पु.। × शुभाशुभकर्मकर्त्ता, भोक्ता कर्मफलस्य च। घ० बृ० वृ० पृ० ५५। * यश्चैतद्वै° घ.। बृ० वृ० पृ. ५५।

व्याख्या—तत्रेति[+] जैनमते चैतन्यलक्षणो जीव इति सम्बन्धः। विशेषणान्याह – ज्ञानादिधर्मेभ्यो भिन्नाभिन्न इति, ज्ञानमादिर्येषां धर्माणामिति ज्ञानदर्शनचारित्ररूपा धर्मा गुणास्तेभ्योऽयं जीवश्चतुर्दशभेदो[९७]ऽपि कथञ्चिद्भिन्नः कथञ्चिदभिन्न इत्यर्थः, एकेन्द्रियादिपञ्चेन्द्रियपर्यन्तेषु जीवेषु स्वापेक्षया ज्ञानवत्त्वमस्त्येवेत्यभिन्नत्वं ज्ञानादिभ्यः, परापेक्षया पुनरज्ञानवत्त्वमिति भिन्नत्वं। लेशतश्चेत् सर्वजीवेषु न ज्ञानवत्त्वं तदा जीवोऽजीवत्वमाप्नुयात्, तथा च सिद्धान्तः—[×]

"सव्वजीवाणं पि य णं अक्खरस्स अणंतओ भागो निच्चुग्घाडिओ
जइ सो वि आवरिज्जा ता जीवो अजीवत्तणं पाविज्जा।"
"सुट्ठु वि मेहसमुदए, होइ पहा चंदसूराणं।"

तथा विवृत्तिमान् इति, विवृत्तिः–परिणामः, सोऽस्यास्तीति मत्वर्थीयो मतुः, सुरनरनारकतिर्यक्षु एकेन्द्रियादिपञ्चेन्द्रियपर्यन्त-

---

+ तत्र जै° प.।

९७. सूक्ष्मैकेन्द्रिया पर्याप्त १–सूक्ष्मैकेन्द्रियपर्याप्त २–बादरैकेन्द्रियापर्याप्त ३–बादरैकेन्द्रियपर्याप्त ४–द्वीन्द्रियापर्याप्त ५–द्वीन्द्रियपर्याप्त ६–त्रीन्द्रियापर्याप्त ७–त्रीन्द्रियपर्याप्त ८–चतुरिन्द्रियापर्याप्त ९–चतुरिन्द्रियपर्याप्त १०–असंज्ञिपञ्चेन्द्रियापर्याप्त ११–असंज्ञिपञ्चेन्द्रियपर्याप्त १२–संज्ञिपञ्चेन्द्रियापर्याप्त १३–संज्ञिपंचेन्द्रियपर्याप्त १४–इति चतुर्दशभेदाः। विशेष चैतन्यचैतन्यलक्षण इति पदस्य तत्त्वत्रैव पृ० ९९। × नन्दिसूत्रं मूलपाठः पृ. २८ (रतलाम)।

जातिषु विविधोत्पत्तिरूपान् परिणामाननुभवतीति जीव इत्यर्थः। अन्यच्च शुभाशुभं कर्म कर्त्ता, शुभं—सातवेद्यं, अशुभम्—असातावेद्यं, शुभं चाशुभं चेति द्वन्द्वः, एवंविधं कर्म—भोक्तव्यफलं कर्तृभूतं, कर्त्ता—स्वात्मसाद्विधाता उपार्जयितेति यावत्, न च सांख्यवदकर्त्तात्मा शुभाशुभावन्धकश्चेति। तथा कर्मफल+ भोक्ता, न च केवलः कर्त्ता किन्तु भोक्ताऽपि—स्वोपार्जितपुण्यपापकर्मफलस्य वेदयिता, न चान्यकृतस्यान्यो भोक्ता। तथा चागमः—

"जीवे णं भंते किं अत्तकडे दुक्खे परकडे दुक्खे तदुभयकडे दुक्खे? गोयमा! अत्तकडे दुक्खे नो परकडे दुक्खे नो तदुभयकडे दुक्खे"। इति

कर्त्तैव भोक्ता। तथा चैतन्यलक्षण इति, 'चैतन्यं' चेतनास्वभावत्वं, तदेव 'लक्षणं' मूलगुणो यस्येति, सूक्ष्मबादरभेदा एकेन्द्रियास्तथा विकलेन्द्रियास्त्रयः संज्ञा(ज्ञ्य)संज्ञिभेदाश्च पंचेन्द्रियाः, सर्वेऽपि पर्याप्ता अपर्याप्ताश्चेति चतुर्दशापि जीवभेदाश्चैतन्यं न व्यभिचरन्तीति। अथाजीवमाह—

×यश्च तद्वैपरीत्यवान् अजीवः स समाख्यात इति, यः पुनस्तस्माज्जीवलक्षणाद्वैपरीत्यम्-अन्यथात्वमस्यास्तीति 'तद्वैपरीत्यवान्', विपरीतस्वभावोऽचेतनः, सोऽजीव समाख्यातः कथितः पूर्वसूरि-

+ 'लमो' घ। × यश्चैतद्वै' घ।

भिरिति। भेदाश्च [९८] धर्माधर्माकाशपुद्गलाः स्कन्धदेशप्रदेशगुणा अद्धा केवलपरमाणुश्चेति चतुर्दशाऽजीवभेदा इति। पुण्यं सत्कर्मपुद्गला इति, पुण्यं नाम तत्त्वं कीदृगित्याह–' सत्कर्मपुद्गला ' इति, सत्–शोभनं सातवेद्यं कर्म, तस्य पुद्गला–दलपाटकानि पुण्यप्रकृतय इत्यर्थः, ताश्च द्विचत्वारिंशत्, तद्यथा—

[९९]
नरतिरिसुराउ उच्चं, सायं परघाय आयवुज्जोयं।
तित्थुस्सासनिमेणं, पणिंदियवइरसमचउरंसं ॥ (४२)

---

९८ तत्र धर्मो लोकव्यापी नित्योऽवस्थितोऽरूपी द्रव्यमस्तिकायोऽसंख्य-प्रदेशो गत्युपग्रहकारी च भवति।....एवमधर्मोऽपि लोकव्यापित्वादिसकलविशेषणविशिष्टो धर्मवन्निर्विशेषं मन्तव्यः, नवरं स्थित्युपग्रहकारी।....एवमाकाशमपि लोकालोकव्यापकमनन्तप्रदेशं नित्यमवस्थितमरूपिद्रव्यमस्तिकायोऽवगाहोपकारकं च वक्तव्यम्।....कालोऽर्धतृतीयद्वीपान्तर्वर्ती परमसूक्ष्मो निर्विभाग एषः समयः,....स च सूर्यादिग्रहनक्षत्रोदयास्तादिक्रियाभिव्यङ्ग्य एको-ऽयमनेन द्रव्यमभिधीयते।....स्पर्शरसगन्धवर्णवन्तः पुद्गलाः,....न केवलं पुद्गलानां स्पर्शादयो धर्माः, शब्दादयश्चेति दृश्यते–" शब्दबन्धसौक्ष्म्यस्थौल्य-संस्थानभेदतमश्छायातपोद्योतवन्तश्च" ( तत्त्वार्थाधिगम० ५० २४) " पुद्गलाः। " इति बृ० वृ० पृ० ६५-६७ )।

९९ नव्यपञ्चमकर्मग्रन्थे त्वेतदर्थसंवादिन्यस्तिस्रो गाथा इमाः–

तसदसचउपणाई, सुरमणुदुगपंचतणुउवंगतियं ।
अगुरुलहुपढमखगई, बायालीसं ति सुहपयडी ॥ (४३)

भावार्थस्तु ग्रंथविस्तरभयान्नोच्यते । इति श्लोकार्थः ॥४८-४९॥

शेषतत्त्वान्याह[×]—

पापं तद्विपरीतं तु, मिथ्यात्वाद्यास्तु हेतवः ।
यस्तैर्बन्धः स विज्ञेय, आश्रवो जिनशासने ॥५०॥

व्याख्या—तु पुनस्तद्विपरीतं पुण्यप्रकृतिविसदृशं पापं पापतत्त्वमित्यर्थः । मिथ्यात्वाद्याश्चेति[१००] मिथ्यादर्शनाविरतिप्रमादकषाययोगहेतवः—पापस्य कारणानि, तत्प्रकृतयश्च द्व्यशीतिः, तद्यथा—

थावरदसचउजाई, अपढमसंठाणखगइसंघयणा ।
तिरिनिरयदुगुवघायं, वन्नचउ नाम चउतीसा ॥ (४४)
नरयाउ नीय अस्साय घायपणयाल सहिय बासीई ।

सुरनरतिगुच्चसायं, तसदसतणुवंगवइरचउरंसं ।
परघाउसातिरिआऊ, वन्नचउपणिदिसुभखगई ॥१५॥
बायालपुण्णपगइ, अपढमसंठाणखगइ संघयणा ॥
तिरिदुगअसायनीओ-वघायइगविगलनिरयतिगं ॥१६॥
थावरदस वन्नचउक्क, घाइपणयालसहिय बासीइ ।
पावपयडित्ति दोसु वि, वन्नाइ गहा सुहा असुहा ॥१७॥

× तत्त्वमाह ध. ज.

१००. "असद्देवगुरुधर्मेषु सद्देवादिबुद्धिर्मिथ्यात्वम्, हिंसाद्यनिवृत्तिरविरतिः, प्रमादो मद्यविषयादिः, कषाया. क्रोधादयः, योगा मनोवाक्कायव्यापाराः ।" (बृ० वृ०पृ०७२ )

इति पुण्यप्रकृतिभ्यतिरिक्ताः पापप्रकृतयो द्व्यशीतिः। वर्णचतुष्कस्य तु शुभाशुभरूपेणोभयत्रापि सम्बध्यमानत्वान्न दोषः। यस्तैर्बन्ध इति, यस्तैर्मिथ्यादर्शनादिभि 'र्बन्धः'—कर्मबन्धः स जिनशासने आश्रवो विज्ञेयः, आश्रवतत्त्वं ज्ञेयमित्यर्थः। तत्प्रकृतयश्च द्वाचत्वारिंशत्, तथा हि – पञ्चेन्द्रियाणि, चत्वारः कषायाः, पंचव्रतानि, मनोवचनकायाः, पंचविंशतिक्रियाश्च कायिक्यादय इत्याश्रवः ॥ ५० ॥

संवरस्तन्निरोधस्तु, बन्धो जीवस्य कर्मणः।
+
अन्योन्यानुगमात्कर्म—सम्बन्धो यो द्वयोरपि ॥५१॥

व्याख्या—तु पुनस्तन्निरोध आश्रवद्वारप्रतिरोधः संवरतत्त्वम्। संवरप्रकृतयस्तु सप्तपंचाशत्, तद्यथा—

समिई गुत्ति परीसह, जइधम्मो भावणा चरित्ताणि।
पण-ति-दुवीस-दस-बारह-पंचभेएहिं सगवन्ना॥ (५१)

नवतत्त्वगाथा २५।

१०१
पञ्च समितयस्तिस्रो गुप्तयो द्वाविंशतिः परीषहा दशविधो

+ 'गमात्मा तु. यः सम्बन्धो ह' ध ज. मु० मु० पृ. ७३॥१॥

१०१, ईर्या—भाषा—एषणा—आदान—पारिष्ठापनिकाः पञ्च समितयः सम्यग्व्यापाररूपाः, मनो—वचन—कायानां तिस्रो गुप्तयः कुशलाकुशलव्यापाराव्यापाररूपाः, क्षुधा—पिपासा—शीत—उष्ण—दंश—अचेल—अरति—स्त्रीचर्या—निषद्या(नैषेधिकी)—शय्या—आक्रोश—वध—याचना—अलाभ—रोग—तृणस्पर्श-

यतिधर्मो द्वादश भावनाः पञ्च चारित्राणीति प्रकृतयः । बन्धमाह-जीवस्य प्राणिनः कर्मणो वेद्यस्यान्योन्यागमात् परस्परं क्षीरनीर-न्यायेन लोलीभावाद् यो द्वयोरपि जीवकर्मणोः[१०२] सम्बन्धः संयोगः स बन्धो नाम तत्त्वमित्यर्थः । स च चतुर्विधः प्रकृतिस्थित्यनुभाग-प्रदेशभेदात्—

[१०३]
स्वभावः प्रकृतिः प्रोक्तः, स्थितिः कालावधारणम् ।
अनुभागो रसो ज्ञेय, प्रदेशो दलसञ्चयः ॥ (४६) इत्यादि ।

---

मल–सत्कार–प्रज्ञा–अज्ञान–सम्यक्त्व–विपर्येऽधिसहनं परीषहा द्वाविंशतिः, क्षमा–मृदुता–आर्जव–त्याग–तप–संयम–सत्य–शौच–अकिंचनत्व–ब्रह्मचर्याणां पालनं दश यतिधर्माः, अनित्यत्व–अशरणत्व–संसार–एकत्व–अन्यत्व–अशुचित्वं –आश्रव–संवर–निर्जरा–लोकस्वभाव–बोधिदुर्लभ–धर्मभावनानां मुहुर्मुहुर्भावनं द्वादश भावनाः, सामायक–च्छेदोपस्थापनीय–परिहारविशुद्धक–सूक्ष्म–संपराय –यथाख्यातैश्चरणाचारित्रं पञ्चविधम् ।

१०२. कर्माण्यष्टविधानि मूलभेदतो ज्ञातव्यानि ज्ञानावरणीय-दर्शनावरणीय-वेदनीय-मोहनीय-आयुः-नाम-गोत्र-अन्तरायनामकानि, उत्तरप्रकृतिभेदतः पुनरष्टपञ्चाशदधिकशतभेदानि ।

१०३. " प्रकृतिः समुदायः स्यात्, स्थितिः कालावधारणम् ।
अनुभागो रसः प्रोक्तः, प्रदेशो दलसञ्चयः ॥ "
इति श्री प्रथमे कर्मग्रन्थे ( पृ. ४ आत्मा० सभा ) ।

ज्ञेयः ॥ ५१ ॥

निर्जरां मोक्षं चाह—

**बद्धस्य कर्मणः शाटो, यस्तु सा निर्जरा मता ।**
**आत्यन्तिको वियोगस्तु, देहादेर्मोक्ष उच्यते ॥५२॥**

व्याख्या—यः पुनर्बद्धस्य स्पष्टबद्धनिधत्तनिकाचितादिरूपेणार्जितस्य कर्मणस्तपश्चरणध्यानजपादिभिः शाटः कर्मक्षपणं सा निर्जरा मता पूर्वसूरिभिरिति, सा पुनर्द्विविधा सकामा–ऽकाम-+भेदेन। तु पुनर्देहादेरात्यन्तिको वियोगो मोक्ष उच्यते, स च नवविधो, यथा—

संतपयपरूवणया, दव्वपमाणं च खित्तफुसणा य ।
कालो य अंतरं भागो, भावो अप्पा बहुं चेव (४७)

नवतत्त्वगाथा ४३ ॥

इति नवप्रकारो हि×करणीयः, बाह्यप्राणानामात्यन्तिको ऽपुनर्भावित्वेनाभावः शिव इत्यर्थः। ननु 'सर्वथा प्राणाभावाद-जीवत्वप्रसङ्गः, तथा च द्वितीयतत्त्वान्तर्भूतत्वान्मोक्षतत्त्वाभाव' इति चेद्, न, मोक्षे हि द्रव्यप्राणानामेवाभावः, भावप्राणास्तु नैष्कर्मि-

+ देनेति। तु पु.। भेदेन। आत्यन्तिको वियोगस्तु प्र.। × हि रमणीयः प्र।

×
कावस्थायामपि सन्त्येव । यदुक्तम्—

यस्मात् क्षायिकसम्यक्त्व-वीर्यसिद्धत्वदर्शनज्ञानैः ।
आत्यन्तिकैः स मुक्तो, निर्द्वन्द्वेनापि च सुखेन ॥ (४८)
ज्ञानादयस्तु भावप्राणा मुक्तोऽपि जीवति स तैर्हि ।
तस्मात्तज्जीवत्व, नित्यं सर्वस्य जीवस्य ॥ ४९)

इति सङ्गतं देहवियोगान्मोक्षः, आदिशब्दाद्देहेन्द्रियधर्मविरहो*ऽपीति पदार्थः ॥ ५२ ॥

नामोद्देशेन तत्त्वानि सङ्कीर्त्य फलपूर्वकमुपसंहारमाह—

**एतानि तत्र तत्त्वानि, यः श्रद्धत्ते स्थिराशयः ।**
**सम्यक्त्वज्ञानयोगेन, तस्य चारित्रयोग्यता ॥५३॥**

व्याख्या—पूर्वोक्तानि तत्र जैनमते तत्त्वानि यः कश्चित् स्थिराशयो दृढचित्तः सन् श्रद्धत्ते अवैपरीत्येन मनुते, एतावता + जानन्नप्यश्रद्दधानो मिथ्यादृगेव, यथोक्तं श्रीगन्धहस्तिमहातर्के-" द्वादशाङ्गमपि श्रुतं विदर्शनस्य मिथ्ये "ति, तस्य दृढमानसस्य सम्यक्त्वज्ञानयोगेन चारित्रयोग्यता-चारित्रार्हता, ' सम्यक्त्वज्ञानयोगेने ति सम्यक्त्वं च ज्ञानं च सम्यक्त्वज्ञाने, तयोर्योगस्तेन,

× यस्मादुक्तम् घ. ।
* °रहितोऽपीति ज. । + श्रीवादिगजगन्ध° घ । श्रीगन्धहस्तिना महातर्के इति बृ० वृ० पृ. ८१ ।

ज्ञानदर्शनविनाकृतस्य हि चारित्रस्य सम्यक्चारित्र×व्यवच्छेदार्थं 'सम्यक्त्वज्ञान 'ग्रहणमिति ॥ ५३ ॥

फलमाह—

**तथा भव्यत्वपाकेन, त[य]स्यैतत् त्रितयं भवेत् ।**
**सम्यग्ज्ञानक्रियायोगा–ज्जायते मोक्षभाजनम् ॥५४॥**

व्याख्या—तथेत्+युपदर्शने÷ भव्यत्वपाकेन[१०४], परिपक्वभव्यत्वेन तद्भव एवावश्यं मोक्षे गन्तव्यमिति, भव्यत्वस्य परिपाकेन यस्य पुंसः स्त्रियो वा एतत् त्रितयं ज्ञानदर्शनचारित्ररूपं भवेत्, यत्तदोनित्यसम्बन्धात् सोऽनुक्तोऽपि सम्बध्यत इति, स पुमान् मोक्षभाजनं जायते–निर्वाणश्रियं भुंक्त इत्यर्थः। कस्मात् ? सम्यग्ज्ञानक्रियायोगात्, 'सम्यगि'ति सम्यक्त्वं दर्शनम्, 'ज्ञान 'माग-

× °त्रस्य व्यव° ध । °अनिराकरणार्थम् धटिप्पणी ।

+ °थेति प्रकारान्तरकथने ध. । ÷°र्शनार्थे भ.° ज ।

१०४ "जीवा द्वेधा भव्याभव्यभेदात्, अभव्यानां सम्यक्त्वाद्यभावः, भव्यानामपि भव्यत्वपाकमन्तरेण तदभाव एव, तथाभव्यत्वपाके तु तत्सद्भावः, ततोऽयमर्थः– भविष्यन्ति निर्वृतिपर्यायेणेति भव्यः, तद्भावो भव्यत्वं, भव्यत्वं नाम सिद्धिगमनयोग्यत्वं जीवानामनादिपारिणामिको भावः" इति वृ० वृ० तो विज्ञेयम्। (पृ ८१)

भावबोधः, 'क्रिया' चरणकरणात्मिका, तासां योगः—सम्बन्धस्त-स्मात्। न च केवलं ज्ञानं वा दर्शनं वा चारित्रं वा मोक्षहेतुकम्, यद्भद्रबाहुस्वामिपादाः—

सुबहुं पि सुयमहीयं, किं काही चरणविप्पमुक्कस्स।
अंधस्स जह पलित्ता, दीवसयसहस्सकोडी वि ॥(५०) तथा—
नाणं चरित्तहीणं, लिंगग्गहणं च दंसणविहीणं।
संजमहीणं च तवं, जो चरइ निरत्थयं तस्स ॥ (५१)

ज्ञानदर्शनचारित्राणि हि समुदितान्येव मोक्षकारणानि, यदुवाच वाचकमुख्यः—

"ज्ञानदर्शनचारित्राणि मोक्षमार्गः" तत्त्वार्थाधिगमसूत्रं १-१।
इति ॥५४॥

प्रमाणे[१०५] आह—

**प्रत्यक्षं च परोक्षं च, द्वे प्रमाणे तथा मते।**
**अनन्तधर्मकं वस्तु, प्रमाणविषयस्त्विह ॥५५॥**

---

१०५ बृहद्वृत्तिौ किञ्चिदत्र लिख्यते—"प्रत्यक्षादिप्रमाणविशेष-लक्षणमत्र ग्रन्थकारः स्वयमेव वक्ष्यति, तच्च विशेषलक्षणं सामान्यलक्षणाविना-भावि, सामान्यलक्षणं च विशेषलक्षणाविनाभावि, सामान्यविशेषलक्षणयोरन्यो-न्यापरिहारेण स्थितत्वात्, तेन प्रमाणविशेषलक्षणस्यादौ प्रमाणसामान्यलक्षणं सर्वत्र वक्तव्यम्, अतोऽत्रापि प्रथमं तदभिधीयते—" स्वपरव्यवसायि ज्ञानं

व्याख्या—तथेति प्रस्तुतमतमध्यानुसन्धाने द्वे प्रमाणे मते अभिमते, के ते ? इत्याह-प्रत्यक्षं च परोक्षं चेति। ×अश्नुते प्रमाणमिति। प्रकर्षेण संशयाद्यभावस्वभावेन मीयते परिच्छिद्यते वस्तु येन तत्प्रमाणम्, स्वमात्मा ज्ञानस्य स्वरूपं, परः स्वस्मादन्योऽर्थ इति यावत् तौ विशेषेण यथावस्थितस्वरूपेणावस्यति निश्चिनोतीत्येवंशीलं यत्तत्स्वपरव्यवसायि, ज्ञायते प्राधान्येन विशेषो गृह्यतेऽनेनेति ज्ञानम्, अत्र ज्ञानमिति विशेषणमज्ञानरूपस्य व्यवहारमार्गानवतारिणः सन्मात्रगोचरस्य स्वसमयप्रसिद्धस्य दर्शनस्य सन्निकर्षादेश्चाचेतनस्य नैयायिकादिकल्पितस्य प्रामाण्यपराकरणार्थं, ज्ञानस्यापि च प्रत्यक्षरूपस्य शाक्यैर्निर्विकल्पनया प्रामाण्येन कल्पितस्यापि संशयविपर्ययानध्यवसायानां च प्रमाणत्वव्यवच्छेदार्थं व्यवसायीति, पारमार्थिकपदार्थसार्थपलापिज्ञानाद्वैतादिवादिमतमपाकर्तुं परेति, नित्यपरोक्षबुद्धिवादिना मीमांसकानामेकात्मसमवायिज्ञानान्तरप्रत्यक्षज्ञानवादिनां वैशेषिकयौगानामचेतनज्ञानवादिनां कापिलानां च कदाग्रहनिग्रहाय स्वेति, समग्रं तु लक्षणवाक्यं परपरिकल्पितस्यार्थोपलब्धिहेतुत्वादेः प्रमाणलक्षणत्वप्रतिक्षेपार्थम्, अत्र च स्वस्य ग्रहणयोग्यः परोऽर्थः स्वपर इत्यस्यापि समासस्याश्रयणाद्व्यवहारिजनापेक्षया यस्य यथा यत्र ज्ञानस्याविसंवादस्तस्य तथा प्रामाण्यमित्यभिहितं भवति, तेन संशयादेरपि अभिमतापेक्षया न प्रमाणत्वव्याहतिः।"
(पृ. ८२।१-२)

×अत्रापि बृहद्वृत्तितः उद्धियते किञ्चित्—"अक्षम्-इन्द्रियप्रतिगतमिन्द्रिया-

अश्नोति वा व्याप्नोति सकलद्रव्यक्षेत्रकालभावानित्यक्षो जीवः,

धीनतया यदुत्पद्यते तत्प्रत्यक्षमिति तत्पुरुषः, इदं व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तं तु स्पष्टत्वम्, तेनानिन्द्रियप्रत्यक्षमपि प्रत्यक्षशब्दवाच्यं सिद्धम्, अक्षो—जीवो वात्र व्याख्येयः, जीवमाश्रित्यैवेन्द्रियनिरपेक्षमनिन्द्रियादिप्रत्यक्षस्योत्पत्तेः।....तद्द्विप्रकारं—सांव्यवहारिकं पारमार्थिकं च, तत्र सांव्यवहारिकं बाह्येन्द्रियादिसामग्रीसापेक्षत्वादपारमार्थिकमस्मदादिप्रत्यक्षम्, पारमार्थिकं स्वात्मसंनिधिमात्रापेक्षमवध्यादिप्रत्यक्षम्। सांव्यवहारिकं द्वेधा—चक्षुरादीन्द्रियनिमित्तं मनोनिमित्तं च, तद्द्विविधमपि चतुर्धा—अवग्रहेहावायधारणाभेदात्, तत्र विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः, अस्यार्थः—विषयो द्रव्यपर्यायात्मकोऽर्थः, विषयी चक्षुरादिः, तयोः समीचीनो भ्रान्त्याद्यजनकत्वेनानुकूलो निपातो योग्यदेशाद्यवस्थानं तस्मादनन्तरं, समुद्भूतमुत्पन्नं यत्सत्तामात्रगोचरं दर्शनं—निराकारो बोधस्तस्माज्जातमाद्यं सत्तासामान्याद्यवान्तरैर्मनुष्यत्वादिभिर्विशेषैर्विशिष्टस्य वस्तुनो यद्ग्रहणं ज्ञानं तदवग्रहः, पुनरवगृहीतविषयसंशयानन्तरं तद्विशेषाकाङ्क्षणमीहा, तदनन्तरं तदीहितविशेषनिर्णयोऽवायः, अवेतविषयस्मृतिहेतुस्तदनन्तरं धारणा। अत्र च पूर्वपूर्वस्य प्रमाणतोत्तरोत्तरस्य च फलतेत्येकस्यापि मतिज्ञानस्य चातुर्विध्यं कथंचित्प्रमाणफलभेदश्चोपपन्नः। तथा यद्यपि क्रमभाविनामवग्रहादीनां हेतुफलतया व्यवस्थितानां पर्यायार्थादेशादस्तथाप्येकजीवतादात्म्येन द्रव्यार्थादेशादमीषामैक्यं कथञ्चिदविरुद्धमन्यथा

अश्नुते विषयमित्यक्षमिन्द्रियम्, अक्षमक्षं प्रति गतं प्रत्यक्षं, हेतुफलभावाभावप्रसक्तिर्भवेदीति प्रत्येयम्। धारणास्वरूपा च मतिरविसंवादस्वरूपस्मृतिफलस्य हेतुत्वात्प्रमाणं, स्मृतिरपि तथाभूतप्रत्यवमर्शस्वभावसंज्ञाफलजनकत्वात्, संज्ञापि तथाभूततर्कस्वभावचिन्ताफलजनकत्वात्, चिन्ताप्यनुमानलक्षणाऽऽभिनिबोधफलजनकत्वात्, सोऽपि ज्ञानादिबुद्धिजनकत्वात्, तदुक्तम्—" मतिः स्मृतिः संज्ञा चिन्ताऽऽभिनिबोध इत्यनर्थान्तरम्।" अनर्थान्तरमिति कथञ्चिदेकविषयं, प्राक् शब्दयोजनान्मतिज्ञानमेतत्। शेषमनेकप्रभेदं शब्दयोजनादुपजायमानमविशदं ज्ञानं श्रुतमिति केचित्। सैद्धान्तिकास्त्ववग्रहेहावायधारणाप्रभेदरूपाया मतेर्वाचकाः पर्यायशब्दा मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्येते शब्दा इति प्रतिपन्नाः। स्मृतिसंज्ञाचिन्तादीनां च कथञ्चिद्गृहीतग्राहित्वेऽप्यविसंवादकत्वादनुमानवत्प्रमाणताभ्युपेया, अन्यथा व्याप्तिग्राहकप्रमाणेन गृहीतविषयत्वेनानुमानस्याप्रमाणताप्रसक्तेः। अत्र च यच्छब्दसंयोजनात्प्राक् स्मृत्यादिकमविसंवादिव्यवहारनिर्वर्तनक्षमं वर्तते तन्मतिः, शब्दसंयोजनात्प्रादुर्भूतं तु सर्वं श्रुतमिति विभाग। स्मृतिसंज्ञादीनां च स्मरणतर्कानुमानरूपाणां परोक्षभेदानामपि यदिह प्रत्यक्षाधिकारे भणनं तन्मतिश्रुतविभागज्ञानाय प्रसङ्गेनेति विज्ञेयम्। " (पृ. ८४)

" अथ परोक्षम्—अविशदमविसंवादि ज्ञानं परोक्षम्, स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत्पञ्चधा।....एकस्यैव ज्ञानस्य यत्राविसंवादस्तत्र प्रमाणता, इतरत्र च तदाभासता, यथा तिमिराद्युपप्लुतं ज्ञानं चन्द्रादावविसंवादकत्वात्प्रमाणं, तत्संख्यादौ च तदेव विसंवादत्वादप्रमाणम, प्रमाणेतरव्यव-

×इन्द्रियाण्याश्रित्य व्यवहारसाधकं यत् ज्ञानमुत्पद्यते तत् प्रत्यक्षमित्यर्थः। अवधिमनःपर्यायकेवलज्ञानानि तद्भेदाश्च प्रत्यक्षमेव, अत एव सांव्यवहारिकपारमार्थिकेन्द्रियकादयो भेदा अनुमाना(व)धिकज्ञानविशेषप्रकाशकत्वादत्रैवान्तर्भवन्ति। 'परोक्षं' चेति, अक्षाणां परं परोक्षम्, अक्षे च परतो वर्त्तते इति वा, परेणेन्द्रियादिना वाऽक्ष्यते परोक्षं स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदम्, अमुयैव भङ्ग्या मतिश्रुतज्ञाने अपि परोक्षमेवेति ÷द्वे प्रमाणे। प्रमाणमुक्त्वा तद्गोचरमाह – तु पुनः इह जिनमते प्रमाणविषयः प्रमाणयोः प्रत्यक्षपरोक्षयो विषयो' गोचरो ज्ञेय इत्यध्याहारः। किं तदित्याशङ्कायाम् अनन्तधर्मकं वस्त्विति, वस्तुतत्त्वं पदार्थस्वरूपं+ किं विशिष्टं 'अनन्तधर्मकं' अनन्तास्त्रिकालविषयत्वादपरिमिता ये धर्माः सहभाविनः क्रमभाविनश्च पर्याया यत्रेति। अनेन साधनमपि दर्शितम्, तथाहि – तत्त्वमिति धर्मि, अनन्तधर्मा×त्मकं साध्यो धर्मः, सत्त्वान्यथानुपपत्तेरिति हेतुः, अन्यथानुपपत्त्येकलक्षणत्वाद्धेतोरन्तर्व्या-

स्थाया विसंवादाऽविसंवादलक्षणवादिति स्थितमेतत् "प्रत्यक्षं परोक्षं च द्वे एव प्रमाणे," अत्र च मतिश्रुतावधिमनःपर्यायकेवलज्ञानानां मध्ये मतिश्रुते परमार्थतः परोक्षं प्रमाणं, अवधिमनःपर्यायकेवलानि तु प्रत्यक्षं प्रमाणमिति।" (पृ. ८९)

×"अक्षाणि चेन्द्रियाणि, तानि प्रतिगतम्-इन्द्रियाण्याश्रित्य" (प्र० मी० पृ.१२)

÷ °क्षमिति द्वे ज. ÷ °रो ज्ञातव्य इ° ध.। + °पयित्वा° ध.।

×°त्मकत्वं ध ।

प्स्यैव साध्यस्य सिद्धत्वाद् दृष्टान्तादिभिर्न प्रयोजनं, यदनन्तधर्मात्मकं न भवति तत् सदपि न भवति, यथा वियदिन्दीवरम्, इति केवलव्यतिरेकी हेतुः, साधर्म्यदृष्टान्तानां पक्षकुक्षिनिक्षिप्तत्वेनान्वयायोगात्। अनन्तधर्मात्मकत्वं चात्मनि तावत् साकारानाकारोपयोगिता कर्तृत्वं भोक्तृत्वं प्रदेशाष्टकनिश्चलताऽमूर्तत्वमसंख्यातप्रदेशात्मकता जीवत्वमित्यादयः सहभाविनो धर्माः, हर्षविषादशोकसुखदुःखदेवनारकतिर्यग्नरत्वादयस्तु क्रमभाविनः। धर्मास्तिकायादिष्वप्यसंख्येयप्रदेशात्मकत्वं गत्याद्युपग्रहकारित्वं मत्यादिज्ञानविषयत्वं तत्तदवच्छेदकावच्छेद्यत्वमवस्थितत्वमरूपित्वमेकद्रव्यत्वं निष्क्रियत्वमित्यादयः। घटे पुनरामत्वं पाकजरूपादिमत्त्वं पृथुबुध्नोदरकम्बुग्रीवत्वं जलादिधारणाहरणसामर्थ्यं मत्यादिज्ञानज्ञेयत्वं नवत्वं पुराणत्वमित्यादयः। एवं सर्वपदार्थेषु नानानयमताभिज्ञेन शाब्दानर्थांश्च पर्यायान् प्रतीत्य वाच्यम्। [१०६]शब्देष्वप्युदात्तानुदात्तस्वरितविवृतसंवृतघोषवदघोषताल्पप्राणमहाप्राणतादयस्तत्तदर्थप्रत्यायनशक्त्यादयश्चावसेयाः। अस्य हेतोरनेकान्तप्रचण्डमुद्

+ हेतुसाध्यस्य सिद्धत्वाद् दृष्टान्ता° घ।

१०६ "शब्देषु चोदात्तानुदात्तस्वरितविवृतसंवृतघोषवदघोषताल्पप्राणमहाप्राणताभिलाप्यानभिलाप्यार्थताव्यक्तव्यावक्तव्यताक्षेत्रकालादिभेदोऽनुगततदनन्तार्थप्रत्यायनशक्त्यादयः," इति यृ. घृ. पृ. ८८

रापातघातदलितशक्तित्वेनासिद्धविरुद्धानैकान्तिकत्वादिकण्टकानामनवकाश एवेत्येवंविधपर्यायानन्त्यसुभगं वस्तु जिनशासने प्रमाणविषय इत्यर्थः ॥ ५५ ॥

लक्ष्यनिर्देशं कृत्वा लक्ष(क्ष्य)लक्षणमाह—

**अपरोक्षतयार्थस्य, ग्राहकं ज्ञानमीदृशम् ।**
**प्रत्यक्षमितरज्ज्ञेयं, परोक्षं ग्रहणेक्षया ॥ ५६ ॥**

व्याख्या—तत्र प्रत्यक्षमिति लक्ष्यनिर्देशः, अपरोक्षतयार्थस्य ग्राहकं ज्ञानमीदृशमिति लक्षणनिर्देशः, परोक्षोऽक्षगोचरातीतस्ततोऽन्यो'ऽपरोक्ष'स्तद्भावस्तत्ता तया साक्षात्कृततयेति यावत्, अर्यत इत्यर्थो, गम्यत इति हृदयम्, अर्थ्यत इति वा'ऽर्थः', दाहपाकाद्यर्थक्रियार्थिभिरभिलष्यत इति, तस्य 'ग्राहकं' व्यवसायात्मकतया परिच्छेदकं यद् ज्ञानं त'दीदृशमि'ति ईदृगेव प्रत्यक्षमिति सण्टङ्कः । 'अपरोक्षतये'[१०७] त्यनेन परोक्षलक्षणसङ्कीर्णतामध्यक्षस्य परिहरति, तस्यासाक्षात्कारितयार्थग्रहणरूपत्वादिति । 'ईदृशमि'त्यमुना तु पूर्वोक्तन्यायात् सावधारणेन विशेषणकदम्बकसचिव-

–°त्वा लक्षण° घ. ।

१०७ "अपरोक्षतयेत्यनेन परोक्षलक्षणसङ्कीर्णतामध्यक्षस्य परिहरति, एतेन परपरिकल्पितानां कल्पनापोढत्वादीनां प्रत्यक्षलक्षणानां निरासः कृतो द्रष्टव्यः ।" (बृ. वृ पृ ६०१)

ज्ञानोपप्रदर्शनात्यपरपरिकल्पितलक्षणयुक्तस्य प्रत्यक्षतां प्रतिक्षिपति, एवं च यदाहुः—

[१०८] "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यम्—
मव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्,"

तथा—

[१०९] "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमि' त्यादि तदयुक्तमित्युक्तं भवति। अपूर्वप्रादुर्भावस्य प्रमाणबाधितत्वादत्यन्तासतां शशविषाणादीनामप्युत्पत्तिप्रसङ्गात्, तस्मादिदमात्मरूपतया विद्यमानमेव विशेषकहेतुकलापसन्निधानात् साक्षादर्थग्रहणपरिणामरूपतया विवर्तेत, तथा चोत्पन्न-जन्मादिविशेषणं न सम्भवेत्, 'अर्थंविधार्थसूचकमेवैवदित्याचक्षीथा'स्तथासत्यविगानमेवेत्यास्तां तावत्। अधुना परोक्षलक्षणं दर्शयति—इतरदित्यादि, अपरोक्षतयार्थस्य ग्राहकं ज्ञानं प्रत्यक्षमुक्तं तस्मादितरदसाक्षादर्थग्राहकं ज्ञानं परोक्षमिति ज्ञेयमवगन्तव्यम्। एतदपि स्वसंवेदना+पेक्षतया प्रत्यक्षमेव बहिरर्थापेक्षतया तु परोक्षव्यपदेशमश्नुत इति

---

१०८ "गौतमसूत्र १-१-४" इति प्रमाणमीमांसा पृ. २६।

१०९ "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" (मीमांसादर्शन १-१-४) इति प्र० मी० पृ. २७।

+ "स्वसंवेदनं प्रत्यक्षेऽनुमानेऽपि समम्" टिप्पनी।

दर्शयन्नाह–ग्रहणेक्षयेति, इह 'ग्रहणं'[११०] प्रक्रमाद्बहिःप्रवर्त्तनमुच्यते, अन्यथा विशेषणवैयर्थ्यात्, तस्येक्षाऽपेक्षा तया–बहिःप्रवृत्ति-पर्यालोचनयेति यावत्, तदयमर्थो–यद्यपि स्वयं प्रत्यक्षं तथापि लिङ्ग-शब्दादिद्वारेण बहिर्विषयग्रहणेऽसाक्षात्कारितया व्याप्रियत इति परोक्षमित्युच्यते इत्यर्थः ॥ ५६ ॥

पूर्वोक्तमेव वस्तुतत्त्वमनन्तधर्मात्मकतया दृढयन्नाह–

**येनोत्पादव्ययध्रौव्य–युक्तं यत् तत् सदिष्यते।**
**अनन्तधर्मकं वस्तु, तेनोक्तं मानगोचरः ॥५७॥**

व्याख्या–येन कारणेन यत् उत्पादव्ययध्रौव्ययुक्तं[१११] तत् सत् सत्त्वरूपमिष्यते तेन कारणेनानन्तधर्मकं वस्तु मानगोचरः प्रत्यक्षपरोक्षप्रमाणविषयं उक्तं–कथितमिति सम्बन्धः। उत्पादश्च व्ययश्च ध्रौव्यं च 'उत्पादव्ययध्रौव्याणि' तेषां युक्तं मेलः, तदेव सत्त्वमिति प्रतिज्ञा, इष्यते केवलज्ञानिभिरभिलष्यत इति। वस्तु-

११० "इह ग्रहणं प्रस्तावादपरोक्षे बाह्यार्थे ज्ञानस्य प्रवर्तनमुच्यते न तु स्वस्य ग्रहणं, स्वग्रहणापेक्षया हि स्पष्टत्वेन सर्वेषामेव ज्ञानानां प्रत्यक्षतया व्यवच्छेद्याभावाद्विशेषणवैयर्थ्यं स्यात्, ततो ग्रहणस्य बहिःप्रवर्तनस्य या ईक्षा–अपेक्षा तया, बहिःप्रवृत्तिपर्यालोचनयेति यावत्, तदयमत्रार्थः–परोक्षं यद्यपि स्वसंवेदनापेक्षया प्रत्यक्षं तथापि लिङ्गशब्दादिद्वारेण बहिर्विषय-ग्रहणेऽसाक्षात्कारितया व्याप्रियत इति परोक्षमित्युच्यते।" (बृ. वृ. पृ. ९.)

१११ तत्त्वार्थाधिगमसूत्र ५ २९ इति प्र० मो० पृ. ४०।

तत्त्वं च उत्पादव्ययध्रौव्यात्मकं, तथाहि–उर्वीपर्वततर्वादिकं सर्वं वस्तु द्रव्यात्मना नोत्पद्यते विपद्यते वा, परिस्फुटमन्वयदर्शनात्, 'लूनपुनर्जातनखादिष्वन्वयदर्शनेन व्यभिचार' इति न वाच्यं, प्रमाणेन बाध्यमानस्यान्वयस्यापरिस्फुटत्वात्, न च प्रस्तुतोऽन्वयः प्रमाणविरुद्धः, *सत्यप्रत्यभिज्ञानसिद्धत्वात्,

[११२]
"सर्वव्यक्तिषु नियतं, क्षणे क्षणेऽन्यत्वमथ च न विशेषः।
सत्योश्चित्यपचित्यो-राकृतिजातिव्यवस्थानात्॥" (५२) इति वचनात्,

ततो द्रव्यात्मना स्थितिरेव सर्वस्य वस्तुनः। पर्यायात्मना तु सर्वं वस्तूत्पद्यते विपद्यते च, अस्खलितपर्यायानुभवसद्भावात्, न चैवं शुक्ले शङ्खे पीतादिपर्यायानुभवेन व्यभिचारः, तस्य स्खलद्रूपत्वात्, न खलु [११३] ×सोऽस्खलद्रूपो येन पूर्वाकारविनाशोऽजहद्वृत्तोत्तराकारोत्पादाऽविनाभावी भवेत्, न च जीवादौ वस्तुनि हर्षा-

---

* "दर्शनस्मरणकारणकं सङ्कलनाज्ञानं प्रत्यभिज्ञानम्" घटिप्पणी।

११२. स्या० मं० पृ १६८

× "पीतादिपर्यायः" घटिप्पणी।

११३. "येन पूर्वाकारविनाशाजहद्वृत्तोत्तराकारोत्पादाविनाभावि भवेत्," (स्या० मं० पृ. १६९)

मपौदासीन्यादिपर्यायपरम्परानुभवः स्खलद्रूपः, कस्यचिद्बाधकस्याभावात् । ननु-' उत्पादादयः परस्परं भिद्यन्ते न वा ? यदि भिद्यन्ते कथमेकं वस्तु त्र्यात्मकम् ?', न भिद्यन्ते चेत् तथापि कथमेकं त्र्यात्मकम् ? तथा च-

" [११४] यद्युत्पादादयो भिन्नाः, कथमेकं त्रयात्मकम् ? ।
अथोत्पादादयोऽभिन्नाः, कथमेकं त्रयात्मकम् ? ॥ " (५३) ।

इति चेत्तदयुक्तं, कथञ्चिद्भिन्नलक्षणत्वेन तेषां कथंचिद्भेदाभ्युपगमात् । तथा ह्युत्पादविनाशध्रौव्याणि स्याद्भिन्नानि, भिन्नलक्षणत्वाद्रूपादिवत्, न च भिन्नलक्षणत्वमसिद्धम्, असत आत्मलाभः, सतः सत्तावियोगो, द्रव्यरूपतयानुवर्त्तनं च, खलूत्पादादीनां परस्परमसङ्कीर्णानि लक्षणानि सकललोकसाक्षिकाण्येव । न चामी भिन्नलक्षणा अपि परस्परानपेक्षाः, खपुष्पवदसत्त्वापत्तेः, तथा ह्युत्पादः केवलो नास्ति, स्थितिविगमरहितत्वात् कूर्मरोमवत्, तथा विनाशः केवलो नास्ति स्थित्युत्पत्तिरहितत्वात् तद्वत्, एवं स्थितिः केवला नास्ति विनाशोत्पादशून्यत्वात् तद्वदेव, इत्यन्योन्यापेक्षाणामुत्पादादीनां वस्तुनि सत्त्वं प्रतिपत्तव्यं । तथा चोक्तम्—

[११५]घटमौलिसुवर्णार्थी, नाशोत्पादस्थितिष्वलम् ।
शोकप्रमोदमाध्यस्थ्यं, जनो याति सहेतुकम् ॥ (५४)

---

११४ स्या० मं० पृ १६९ ।

११५-११६ श्रीसमन्तभद्रकृता आप्तमीमांसा श्लो० ५९-६० इति स्या० मं० पृ० १७० ।

११६पयोव्रतो न दध्यत्ति, न पयोऽत्ति दधिव्रतः।
अगोरसव्रतो नोभे, तस्माद्वस्तु त्रयात्मकम् ॥ (५५) इति।

व्यतिरेकश्च यदुत्पादव्ययध्रौव्यात्मकं न भवति, तद्वस्त्वेव न, यथा खरविषाणं, यथेदं तथेदमिति। अत एवानन्तधर्मकं वस्तु मानगोचरः प्रोक्तम्, अनन्ता धर्माः—पर्यायाः सामान्यविशेषलक्षणा यत्रेत्यनन्तधर्मकं वस्त्विति[११७] उत्पादव्ययध्रौव्यात्मकस्यैवानेकधर्मकत्वं

---

११७. अथ बौद्धादिसर्वदर्शनाभीष्ट दृष्टान्ता युक्तयश्चानेकान्तसिद्धये समाख्यायन्ते—बौद्धादिसर्वदर्शनानि संशयज्ञानमेकमुल्लेखद्वयात्मकं प्रतिजानन्ति नानेकान्तं प्रतिक्षिपन्ति। तथा स्वपक्षसाधकं परपक्षोच्छेदकं च विरुद्धधर्माध्यस्तमनुमानं मन्यमानाः परेऽनेकान्तं कथं पराकुर्युः?। मयूराण्डरसे नीलादयः सर्वेऽपि वर्णा नैकरूपा नाप्यनेकरूपाः, किन्त्वेकानेकरूपा यथावस्थितास्तथैकानेकाद्यनेकान्तोऽपि, तदुक्तं नामस्थापनाद्यनेकान्तमाश्रित्य "मयूराण्डरसे यद्वद्वर्णा नीलादयः स्थिताः। सर्वेऽप्यन्योन्यसंमिश्रास्तद्वन्नामादयो घटे॥१॥ नान्वयः स हि भेदित्वान्न भेदोऽन्वयवृत्तितः। मृद्भेदद्वयसंसर्गवृत्तिजात्यन्तरं घटः ॥ २ ॥ भागे सिंहो नरो भागे, योऽर्थो भागद्वयात्मकः। तमभागं विभागेन, नरसिंहं प्रचक्षते ॥ ३ ॥ न नरः सिंहरूपत्वान्न सिंहो नररूपतः। शब्दविज्ञानकार्याणां भेदाज्जात्यन्तरं हि सः ॥ ४ ॥ त्रैरूप्यं पञ्चरूप्यं वा, ब्रुवाणा हेतुलक्षणम्। सदसत्त्वादि सर्वेऽपि, कुतः परे न मन्वते ॥ ५ ॥" इत्यादिकमन्यद्बौद्धादिदर्शनविरोधाभासास्तेषामन्यप्रवादिनां खण्डनमनेकान्तवादमण्डनं च सर्वं विज्ञेयं बृहद्वृत्त्यादितः पृ. ९८।

युक्तियुक्ततामनुभवतीति ज्ञापनायैव भूयोऽनन्तधर्मकपदप्रयोगो, न पुनः पाश्चात्यपद्योक्तानन्तधर्मपदेन पौनरुक्त्यमाशङ्कनीयमिति पद्यार्थः, ग्रन्थस्य बालावबोधार्थफलत्वात् ॥५७॥

अथोपसंहरन्नाह—

जैनदर्शनसंक्षेप, इत्येष[118] कथितोऽनघः ।
[119]पूर्वापरविघातस्तु, यत्र क्वापि न विद्यते ॥ ५८ ॥

व्याख्या—इति पूर्वोक्तप्रकारेण एष प्रत्यक्षलक्ष्यो जैनदर्शनसंक्षेपः कथितः, विस्तरस्यागाधत्वेन वक्तुमगोचरत्वात्, उपयोगसारः संक्षेपो निवेदितः, + किंविशिष्टः ? अनघो निर्दूषणः, सर्ववक्तव्यस्य सर्वज्ञमूलत्वेन दोषकालुष्यानवकाशात् । तुः समुच्चयार्थे, यत्र पुनः पूर्वापरविघातः क्वापि न विद्यते । पूर्वस्मिन्नादौ अपरस्मिंश्च प्रान्ते विघातो विरुद्धार्थता यत्र दर्शने क्वापि पर्यन्तग्रन्थेऽपि परस्परविसंवादो नास्ति, आस्तां तावत् केवलिभाषितद्वादशाङ्गेषु पारम्पर्यग्रन्थेष्वपि सुसम्बद्धार्थत्वाद् विरुद्धार्थदौर्गन्ध्या-

११८ °त्येवं क° ध. वृ. सू. पृ. १०३।१ ११९° रपर(रा)घाता, यत्र ध. वृ. सू. पृ० १०३।१ +'किम्भूतोऽन° ज.।

१२०
भावः, अयं भावो यत्–परतीर्थिकानां मूलशास्त्रेष्वपि न युक्तियुक्ततां पश्यामः किं पुनः पाश्चात्यविप्रलम्भकग्रथितग्रन्थकन्थासु, यच्च क्वापि कारुण्यादिपुण्यकर्म पुण्यानि च वचांसि कानिचिदाकर्णयामस्तान्यपि त्वदुक्तसूक्तसुधापयोधिमन्थोद्धृतान्येव रत्नानीव सङ्गृह्य स्वात्मानं रत्नपतय इव बहुमन्वाना मुधा मगलमन्ते। *यच्छ्रीसिद्धसेनदिवाकरपादाः––

सुनिश्चितं नः परतन्त्रयुक्तिषु, स्फुरन्ति याः काश्चन सूक्तिसम्पदः।
तवैव ताः पूर्व+महार्णवोत्थिताः, जगत्प्रमाणं जिनवाक्यविप्रुषः॥ (५६) इति
१२१
परमार्थः ॥ ५८ ॥

---

१२० "अयं भावः––यथा परदर्शनसंबन्धिषु मूलशास्त्रेष्वपि किं पुनः पाश्चात्यविप्रलम्भकग्रथितग्रन्थकन्थासु प्रथमपश्चादभिहितयोर्मिथो विरोधोऽस्ति तथा जैनदर्शने क्वापि केवलिप्रणीतद्वादशाङ्गेषु पारम्पर्यग्रन्थेषु च सुसंबद्धार्थत्वात्सूक्ष्मेक्षिकया निरीक्षितोऽपि स नास्ति। यत्तु परदर्शनेष्वपि क्वचन सहृदयहृदयङ्गमानि वचनानि कानिचिदाकर्णयामः तान्यपि जिनोक्तसुधासिन्धुसमुद्गतान्येव संगृह्य मुधा स्वात्मानं बहु मन्यते, यच्छ्रीसिद्धसेनपादाः–" इति बृ. वृ. पृ. १०३।

* यच्छ्रीदिवाक° पु.। यतः श्रीदिवाक° ध.। + °र्णं° प्र.।

१२१ "अथ जैनमते लिङ्गवेषाचारादि प्रोच्यते––जैना द्विविधाः

श्वेताम्बरा दिगम्बराश्च, तत्र श्वेताम्बराणां रजोहरणमुखवस्त्रिका[1]लोचादि लिङ्गं, चोल्पट्टकल्पादिको वेषः, पञ्च समितयस्तिस्रश्च गुप्तयस्तेषामाचारः,—"ईर्या-भाषैषणादाननिक्षेपोत्सर्गसंज्ञिकाः । पञ्चाहुः समितीस्तिस्रो गुप्तीस्त्रियोगनिग्रहात् ॥" इति वचनात्, अहिंसासत्यास्तेयब्रह्माकिंचन्यवान् क्रोधादिविजयी दान्तेन्द्रियो निर्ग्रन्थो गुरुः, माधुकर्या वृत्त्या [2]नवकोटीविशुद्धस्तेषां नित्यमाहारः, संयमनिर्वाहार्थमेव वस्त्रपात्रादिधारणम्, वन्द्यमाना धर्मलाभमाचक्षते । दिगम्बराः पुनर्नाग्न्यलिङ्गाः पाणिपात्राश्च, चतुर्धा-काष्ठासङ्घमूलसङ्घमाथुरसङ्घगोप्यसङ्घभेदात्, काष्ठासङ्घे चमरीवालैः पिच्छिका, मूलसङ्घे मायूरपिच्छैः पिच्छिका, माथुरसङ्घे मूलतोऽपि पिच्छिका नादृता, गोप्या मायूरपिच्छिका, आद्यास्त्रयोऽपि सङ्घा वन्द्यमाना धर्मवृद्धिं भणन्ति, स्त्रीणां मुक्तिं केवलिनां भुक्तिं सद्व्रतस्यापि सचीवरस्य मुक्तिं च न मन्वते, गोप्यास्तु वन्द्यमाना धर्मलाभं भणन्ति, स्त्रीणां मुक्तिं केवलिनां भुक्तिं च मन्यन्ते, गोप्या यापनीया इत्यप्युच्यन्ते, सर्वेषां च भिक्षाटने भोजने च द्वात्रिंशदन्तराया मलाश्च चतुर्दश वर्जनीयाः, शेषमाचारे गुरौ च देवे च सर्वं श्वेताम्बरैस्तुल्यम्, नास्ति तेषां मिथः शास्त्रेषु तर्केष्वपरो भेदः ।" इति बृहद्वृत्तिः, पृ. ४५ । एतद्वृत्तिप्रणेतॄणां श्रीमदाचार्यगुणरत्नसूरीश्वराणां सत्तासमयो वैक्रमिक १४६६ प्रतीयते, एतस्मिन्काले स्थानकवासिढूंढकाख्यतृतीयो भेदोऽनुत्पन्नत्वेन नोल्लिखितः, समधिकशतवर्षानन्तरमस्योत्पत्तिर्लिखारीलुंकानामकेन स्वयमव्रतिनाऽपि जाता, एते पुनर्मुखबन्धाः

१ हस्तेन केशलुञ्चनं लोचः । २ करणकारापणानुमोदनविपर्ययौ हननपचनक्रयणरहित आहारः स नवकोटीविशुद्धः ।

कुलिङ्गधारिणो विरुद्धाचारचारिणो जिनमन्दिरमूर्त्तिपूजाद्वेषिणो व्याकरणन्यायशास्त्रादिविद्याविहीनाः पञ्चचत्वारिंशदागमान् सूत्रनिर्युक्तिभाष्यचूर्णिटीकारूपां च सकलां पञ्चाङ्गीं न मन्यन्ते, एतेषु सप्तविंशति–द्वाविंशत्यादिटोलकभेदा नवकोटीषट्कोटयादिकाश्च, एतस्मात्पुनर्भीखमतः तेरापन्थीनामकत्रयोदशगोष्ठिो भेदो जातो य आर्त्तदयादानधर्ममपि न मन्यते, आर्याऽऽनीतभीक्षामपि भुङ्क्ते, दिगम्बरवदेतेऽपि पाश्चात्याः, न एतेषां किञ्चित्स्वतन्त्रं तर्कशास्त्रादिकं, श्वेताम्बरसत्कसाहित्यादिसाधनैः स्ववृत्तिं कल्पयन्त एते न जैनाः किन्तु जैनाभासा एव । अत्र पुनर्बृहद्वृत्तित एवाग्रे लिख्यते—

" अथानुक्तमपि किमपि लिख्यते—प्राप्यकारीण्येवेन्द्रियाणीति कणभक्षाक्षपादमीमांसकसाङ्ख्याः समाख्यान्ति, चक्षुश्रोत्रेतराणि तथेति ताथागताः, चक्षुवर्जानीति स्याद्वादावदातहृदयाः । श्वेताम्बराणां संमतिर्नयचक्रवालः, स्याद्वादरत्नाकरो रत्नाकरावतारिका तत्त्वार्थः प्रमाणवार्त्तिकं प्रमाणमीमांसा न्यायावतारोऽनेकान्तजयपताकाऽनेकान्तप्रवेशो धर्मसंग्रहणी प्रमेयरत्नकोशश्चेत्येवमादयोऽनेके तर्कग्रन्थाः दिगम्बराणां तु प्रमेयकमलमार्तण्डो न्यायकुमुदचन्द्र आप्तपरीक्षाऽष्टमहस्री सिद्धान्तसारो न्यायविनिश्चयटीका चेत्यादयः । "
( पृ. १०७/१ )

जैने दर्शने " तीर्थङ्कराश्चतुर्युक्ता विंशतिर्वृषभादयः । क्षिप्ताष्टकर्मनिर्मुक्ताः केवलज्ञानभास्कराः ॥८॥ महाव्रतधरो धीरः सर्वागमरहस्यवित् । क्रोधमानादिविजयी निर्ग्रन्थो गुरुरुच्यते ॥९॥ प्रत्यक्षं च परोक्षं च द्वे प्रमाणे इह स्मृते ।

---

-तत्र प्रमेयं स्याद्वादाधिष्ठितं द्रव्यपर्ययम् ॥१०॥···जिनकल्पादयो भेदा व्युच्छिन्नाः साम्प्रतं कलौ। वर्त्तमानं ततः प्रोक्तं सर्वं ज्ञेयं जिनागमात् ॥३०॥ सम्यग् जैनं मतं ज्ञात्वा योगेऽष्टाङ्गे रमेत यः। स कर्मलाघवं कृत्वा लब्धा सौख्यपरम्पराम् ॥३१॥" इति राजशेखरिय षड्द० समु० पृ० १–३। "लब्धाऽनन्तचतुष्कस्य लोकागूढस्य चात्मनः। क्षीणाष्टकर्मणो मुक्तिर्निर्व्यावृत्तिर्जिनोदिता ॥९॥" इति सर्वदर्शनसंग्रहे पृ. ८८। (पुना)

सर्वदर्शनसंग्रहटीकायां—"जैनव्यतिरिक्ताः सर्वे एकान्तवादिनः, ते च सप्तविधाः—तत्र सत्कार्यवादिनः सांख्याः पदार्थानां सर्वदास्तित्वमेवेति वदन्ति, शून्यवादिनो बौद्धविशेषा माध्यमिकाः पदार्थानां नास्तित्वमेवेत्याहुः, असत्कार्यवादिनो नैयायिकादयः पदार्थानामुत्पत्तेः पूर्वमभाव उत्पत्यनन्तरं सत्त्वं ततो नाशे पुनरभाव इति कालभेदेन पदार्थानां सत्त्वमसत्त्वं च मन्यन्ते, जगतो मायोपादानकत्वं मन्यमाना मायावेदान्तिनः पदार्थानामनिर्वाच्यत्वमाचक्षते यतो मायिकं मृगजलादिप्रतीतिकालेऽपि नास्तीति पश्चाद्बाध्यतेऽतः पदार्थानां सत्त्वकाल एव वस्तुतोऽसत्त्वम्, अस्तित्वनास्तित्वयोर्मिथो विरुद्धयोर्युगपद्वाचा वक्तुमशक्यत्वेनानिर्वाच्या एव पदार्था इति तदभिप्रायः, केचिन्मायावेदान्तिन एव सांख्योक्तं पदार्थानां सत्त्वं स्वीकुर्वन्तो मायिकत्वेनानिर्वाच्यत्वं प्रतिपेदिरे, अन्ये च मायावेदान्तिनः शून्यवाद्युक्तं पदार्थानां नास्तित्वं स्वीकुर्वन्तो मायिकत्वेनानिर्वाच्यत्वं ब्रुवते, अपरे च मायावेदान्तिनो नैयायिकाद्युक्तं पदार्थानां कालभेदेन सत्त्वमसत्त्वं च स्वीकुर्वन्तो मायिकत्वेनानिर्वाच्यत्वमङ्गी-

अथ वैशेषिकमतस्य देवतादिसाम्येन ये नैयायिकेभ्यो विशेषं नाभ्युपगच्छन्ति तान् बोधयन्नाह—

देवताविषये भेदो, नास्ति नैयायिकैः समम् ।
वैशिषिकाणां तत्त्वेषु, विद्यतेऽसौ निदर्श्यते ॥ ५९ ॥

व्याख्या—शिवदैवतसाम्येऽपि तत्त्वादिविशेषविशिष्टत्वाद्वैशेषिकाः, तेषां वैशेषिकाणां काणादानां नैयायिकैरक्षपादैः समं सार्द्धं देवताविषये शिवदेवताभ्युपगमे भेदो विशेषो नास्ति, तत्त्वेषु शासनरहस्येषु भेदो विद्यते, तु शब्दोऽध्याहार्यः, असौ विशेषो नैयायिकेभ्यः पृथग्भावो निदर्श्यते प्रकाश्यत इत्यर्थः ॥५९॥

कुर्वते । एकान्तवादिनश्चैते सांख्यादयः सप्त घटादिपदार्थानां स्वरूपप्रदर्शनकाले स्वस्वमतानुसारेण घटोऽस्ति घटो नास्तीत्येवं प्रतिपादयन्ति, जैनास्तु तत्तदुक्तमङ्गीकृत्य केवलं तत्र स्यात्पदप्रक्षेपं कुर्वन्ति, यथा सांख्यैर्घटोऽस्मीति सत्यमेव परं तु न+ निश्चितं तत्स्वरूपम्, अतः स्यादस्तीति वक्तव्यम् । "(पृ. ८३, पुना, भाण्डारकर इन्स्टी० गवर्नमेन्ट ओरीयन्टल हिन्दु सिरिझ)

+ टीकाकृतः स्याद्वादविषयस्यैतदज्ञानं सूचयति, स्याद्वादो नाम नानिश्चितो वादः किन्तु तदपरधर्मसापेक्षया तद्धर्मस्य निश्चयेन कथनम्, एकान्तवादिनोऽनन्तधर्मात्मकस्य वस्तुनोऽभीष्टैकधर्मस्यैकान्तप्रतिपादनेन तच्छेषधर्मानपलपन्ति, स्याद्वादिनस्तु त्वनेकान्तप्रतिपादनेन तानपि स्थापयन्ति—बोधविषयीकुर्वन्ति ।

तान्येव तत्त्वान्याह—

द्रव्यं गुणस्तथा कर्म, सामान्यं च चतुर्थकम्।
विशेषसमवायौ च, तत्त्वषट्कं हि तन्मते ॥ ६० ॥

व्याख्या—तन्मते वैशेषिकमते हि निश्चयेन तत्त्वषट्कं ज्ञेयमिति सम्बन्धः। कथमित्याह–द्रव्यं गुण इत्यादि, आदिमं तत्त्वं 'द्रव्यं' नाम, भेदबाहुल्येऽपि सामान्यादैक्यम्, द्वितीयं तत्त्वं 'गुणो' नाम, तथेति भेदान्तरसूचने, तृतीयं तत्त्वं कर्मसंज्ञम्, चतुर्थकं तत्त्वं सामान्यम्, चतुर्थमेव चतुर्थकम्, स्वार्थे 'क' इति कप्रत्ययः, चः समुच्चये, अन्यच्च विशेषसमवायौ विशेषश्च समवायश्चेति द्वन्द्वः, इति तद्दर्शने तत्त्वानि षड् ज्ञेयानि[122] ॥६०॥

भेदानाह—

तत्र द्रव्यं नवधा, भूजलतेजोऽनिलान्तरिक्षाणि।
कालदिगात्ममनांसि च, गुणः पुनः चतुर्विंशतिधा[123] ॥६१॥
स्पर्शरसरूपगन्धाः, शब्दः संख्या विभागसंयोगौ।
परिमाणं च पृथक्त्वं, तथा परत्वापरत्वे च ॥६२॥

१२२ 'केचित्त्वभाव सप्तमं पदार्थमाहुः।" बृ० वृ० पृ० १०८/१।
१२३ पञ्चविंशतिधा इति बृ० वृ० पृ० १०८।

**बुद्धिः सुखदुःखेच्छा, धर्माधर्मौ प्रयत्नसंस्कारौ+ ।**
**द्वेषः स्नेहगुरुत्वे, द्रवत्ववेगौ गुणा एते ॥ ६३ ॥**

व्याख्या—नव द्रव्याणि चतुर्विंशतिगुणाश्च निगदसिद्धान्येव, संस्कारस्य वेगभावनास्थितिस्थापकभेदात् त्रैविध्येऽपि संस्कारत्वजात्यपेक्षया एकत्वात् शौर्यौदार्यादीनां च गुणानामेष्वेव चतुर्विंशतौ गुणेष्वन्तर्भावान्नाधिक्यम्[124] ॥ ६१-६२-६३ ॥

कर्मसामान्यभेदानाह—

**उत्क्षेपावक्षेपावा-कुञ्चनकं प्रसारणं गमनम् ।**
**पञ्चविधं कर्मैतत्, परापरे द्वे तु सामान्ये ॥ ६४ ॥**

व्याख्या—पञ्चापि कर्मभेदाः स्पष्टा एव । गमनग्रहणाद् भ्रमणरेचनस्पन्दनाद्यविरोधः[125] । तु पुनः, सामान्ये द्वे द्विसंख्ये, के ते इत्याह—परस्परे, परं चापरं च 'परापरे,' परसामान्यमपरसामान्यं चेत्यर्थः ॥ ६४ ॥

---

+ °राः । ध ज. ।

१२४ "केचित्तु संस्कारस्य त्रिविधस्य भेदतया वेगं प्राहुः. तन्मते चतुर्विंशतिरेव गुणाः, शौर्यौदार्यकारुण्यदाक्षिण्यौन्नत्यादीनां च गुणानामेष्वेव प्रयत्नबुद्ध्यादिषु गुणेष्वन्तर्भावान्नाधिक्यम् ।" वृ० वृ० पृ० १११/१ । स्या० मं० चतुर्विंशतिगुणा एवमेव प्रोक्ताः । पृ. ४२ ।

१२५ "यदनियतदिग्देशैः संयोगविभागकारणं तद् गमनम्, अनियतग्रहणेन भ्रमणपतनस्पन्दनरेचनादीनामपि गमन एवान्तर्भावो विभावनीयः ।" वृ०वृ०पृ० १११ ।

एतद्व्यक्ति विशेषव्यक्ति चाह—

**तत्र परं सत्ताख्यं, द्रव्यत्वाद्यपरमथ विशेषस्तु ।**

**निश्चयतो नित्यद्रव्य—वृत्तिरन्त्यो विनिर्द्दिशेत्[१२६] ॥६५॥**

व्याख्या—तत्र तयोर्मध्ये परं सत्ताभावो महासामान्यमितिवोच्यते, द्रव्यत्वाद्यवान्तरसामान्यापेक्षया महाविषयत्वात्, अपरसामान्यं च द्रव्यत्वादि, एतच्च 'सामान्यविशेष' इत्यपि व्यपदिश्यते, तथाहि—द्रव्यत्वं नवसु द्रव्येषु वर्तमानत्वात् सामान्यं गुणकर्मभ्यो व्यावृत्तत्वाद्विशेषः, ततः कर्मधारये 'सामान्यविशेष' इति । एवं द्रव्यत्वाद्यपेक्षया पृथिवीत्वादिकमपरं तदपेक्षया घटत्वादिकम्, एवं चतुर्विंशतौ गुणेषु वृत्तेर्गुणत्वं सामान्यं द्रव्यकर्मभ्यो व्यावृत्तेश्च विशेषः, एवं गुणत्वापेक्षया रूपत्वादिकं÷ तदपेक्षया नीलत्वादिकम्, एवं पंचसु कर्मसु वर्त्तमानत्वात् कर्मत्वं सामान्यं द्रव्यगुणेभ्यो व्यावृत्तत्वाद्विशेषः, एवं कर्मत्वापेक्षया उत्क्षेपणत्वादिकं ज्ञेयम् । तत्र सत्ता द्रव्यगुणकर्मभ्योऽर्थान्तरं, कया युक्त्या ? इति चेदुच्यते —न द्रव्यं सत्ता, द्रव्यादन्येत्यर्थः, एकद्रव्यवत्त्वात्, एकैकस्मिन् द्रव्ये वर्त्तमानत्वादित्यर्थः, द्रव्यत्ववत्, यथा द्रव्यत्वं नवसु द्रव्येषु

१२६ °निर्दिए. ध.। वृ० चू० पृ. १११।

÷ °दिकं ज्ञेयं तद° पु ।

प्रत्येकं वर्त्तमानं द्रव्यं न भवति, किन्तु सामान्यविशेषलक्षणं द्रव्यत्वमेव, एवं सत्तापि। वैशेषिकाणां हि–[127]अद्रव्यं वा द्रव्यं, अनेकद्रव्यं वा द्रव्यं, तत्राद्रव्यं द्रव्यमाकाशं कालो दिगात्मा मनः परमाणवः, अनेकद्रव्यं तु द्व्यणुकादिस्कन्धाः, एकद्रव्यं तु द्रव्यमेव न भवति, एकद्रव्यवती च सत्ता, इति द्रव्यलक्षणविलक्षणत्वान्न द्रव्यम्। एवं न गुणः सत्ता, गुणेषु भावात्, गुणत्ववत्, यदि हि सत्ता+ गुणः स्यान्न तर्हि गुणेषु वर्त्तेत, निर्गुणत्वाद्गुणानां, वर्त्तते च गुणेषु सत्ता, सन् गुण इति प्रतीतेः। तथा न सत्ता कर्म, कर्मसु भावात्, कर्मत्ववत्, यदि हि सत्ता कर्म स्यान्न तर्हि कर्मसु वर्त्तेत, निष्कर्मत्वात्कर्मणां, वर्त्तते च कर्मसु भावः सत्कर्मेति प्रतीतेः, तस्मात् पदार्थान्तरं सत्ता। अथ विशेषपदार्थमाह आर्याद्धेन विशेषस्त्विति, निश्चयतो नित्यद्रव्यवृत्तिरन्त्यो विनिर्दिशेदिति–'विनिर्दिशेत्' कथयेत् आचार्य इति ज्ञेयम्, कथमित्याह–'अन्त्यो विशेषो नित्यद्रव्यवृत्ति'रिति, तथाहि–नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः–अत्यन्तव्यावृत्तिहेतवः, ते द्रव्यादि वैलक्षण्यात् पदार्थान्तरम्, तथा च प्रशस्तकरः–

---

१२७ 'द्रव्य द्विधा अद्रव्यमनेकद्रव्य च, न विद्यते द्रव्य जन्यतया जनकतया च यस्य तदद्रव्य द्रव्यम्, यथाकाशकालादि, अनेक द्रव्य जन्यतया च जनकतया च यस्य तदनेकद्रव्य द्रव्यम्', इति 'ख'टिप्पन्याम्।" स्या० मं० पृ. ४३)

+ °त्ताऽपि गुणः ज।

१२८ " अन्त्येषु भवा अन्त्या. स्वाश्रयविशेषकत्वाद्विशेषा', विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनःसु प्रतिद्रव्यमेकशो वर्त्तमाना अत्यन्तव्यावृत्तिबुद्धिहेतवः, यथाऽस्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृति*क्रियावयवोपचयावयवविशेषसंयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा–'गौ. शुक्लः पीनः शीघ्रगतिः ककुद्मान् महाघण्ट' इति. तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनःसु चान्यनिमित्तासम्भवाद्येभ्यो निमित्तेभ्य. प्रत्याधारं 'विलक्षणोऽयं' 'विलक्षणोऽयमि'ति प्रत्ययव्यावृत्तिर्देशकालविप्रकर्षदृष्टे च परमाणौ 'स एवायमि'ति च प्रत्यभिज्ञानं भवति तेऽन्त्या विशेषा" इति।

अमी च विशेषरूपा एव, न तु द्रव्यत्वादिवत् सामान्यविशेषोभयरूपाः, व्यावृत्तेरेव हेतुत्वादिति पदार्थः॥ ६५॥

समवायपदार्थव्यक्तिलक्षणमाह—

**य इहायुतसिद्धाना–माधाराधेयभूतभावानाम्।**
**सम्बन्ध इह प्रत्यय–हेतुः+ प्रोक्तः स समवायः॥६६॥**

व्याख्या—इह प्रस्तुतमते अयुतसिद्धानामाधार्याधारभूत-

१२८ "विशेषप्रकरणे प्रशस्तपादभाष्ये पृ १६८" इति स्या० मं० पृ. ४३।

* °कृतिगुणक्रियावयवसंयोग (मु० मु० पृ ११२)

°कृतिगुणक्रियावयवोपचयावयवसंयोग० (स्या० मं० पृ० ४४. "विशेषसंयोग' इत्यपिपाठ, प्रशस्तपादभाष्येऽनुपलब्धेः," इति तत्र टिप्पणी)

+ °तु सो भवति सम° ५।

१२९ मतस्य संक्षेपः परिकीर्त्तितः कथित इति ॥ ६७ ॥

षष्ठं दर्शनमाह—

**जैमनीयाः पुनः प्राहुः, सर्वज्ञादिविशेषणः ।**
**देवो न विद्यते कोऽपि, यस्य मानं वचो भवेत् ॥६८॥**

व्याख्या—जैमनिमुनेरमी जैमनीयाः, पुत्रपौत्राद्यर्थे तद्धित-

---

१२९ "अथात्राप्यनुक्तं किंचिदुच्यते—व्योमादिकं नित्यं, प्रदीपादि कियत्कालावस्थायि, बुद्धिसुखादिकं च क्षणिकं, चैतन्यादयो रूपादयश्च धर्मा आत्मादेर्घटादेश्च धर्मिणोऽत्यन्तं व्यतिरिक्ता अपि समवायसम्बन्धेन संबद्धाः, स च समवायो नित्यः सर्वगत एकश्च, सर्वगत आत्मा, बुद्धिसुखदुःखेच्छाधर्माधर्मप्रयत्नभावनाख्यसंस्कारद्वेषाणां नवानामात्मविशेषगुणानामुच्छेदो मोक्षः, परस्परविभक्तौ सामान्यविशेषौ द्रव्यपर्यायौ च प्रमाणगोचरः, द्रव्यगुणादिषु षट्सु पदार्थेषु स्वरूपसत्त्वं वस्तुत्वनिबन्धनं विद्यते, द्रव्यगुणकर्मसु च सत्तासम्बन्धो वर्तते सामान्यविशेषसमवायेषु च स नास्तीति । **षट्पदार्थी** कणादकृता, तद्भाष्यं प्रशस्तकरकृतं, तट्टीका **कन्दली** श्रीधराचार्यीया, **किरणावली** तूदयनसंदृब्धा, व्योममतिर्व्योमशिवाचार्यविरचिता **लीलावतीतर्कः**, श्रीवत्साचार्यीय **आत्रेयतन्त्रं** चेत्यादयो वैशेषिकतर्काः ।" इति बृ० वृ० पृ. ११४ तः प्रासङ्गिकं टिप्पितम्, अधिकं च किञ्चिन्नैयायिकदर्शमप्रान्तकृतटिप्पनतो विज्ञेयम् ।

पूर्वमीमांसावादिनश्च द्विधा–प्र(भा)माकरा भाट्टाश्च, क्रमेण पञ्च–षट्प्रमाणप्ररूपकाः। अत्र तु सामान्येन सूत्रकृत् पूर्वमीमांसावादिन एव जैमनीयानुद्दिष्टवान्। ते पुनर्जैमनीया प्राहुः कथयन्ति, कथमित्याह–'सर्वज्ञादिविशेषणः कोऽपि देवो न विद्यते यस्य+ वचो वचनं मानं प्रमाणं भवेत्'। 'सर्वज्ञादिविशेषण' इति सर्वज्ञत्वादिना गुणेन विशेष्यत इति, आदिशब्दाद् विभुत्वनित्यत्वचिदात्मकत्वादिगुणविशिष्टः, कोऽपि देवो नास्ति यद्वचनं प्रमाणतामनुभवेत्, मानुषत्वाविशेषेण विप्रलम्भकत्वाद् द्रव्यपुरुषवत् सर्वज्ञादिगुणविशिष्टपुरुषाद्यभाव इत्यर्थः। अथ किङ्करायमाणसुरासुरसेव्यमानताद्युपलक्षणेन त्रैलोक्यसाम्राज्यसूचकच्छत्रचामरादिविभूत्यन्यथानुपपत्तेश्चास्ति कश्चित्पुरुषविशेषः सर्वज्ञ इति चेन्न, त्वद्यूथ्योक्तवचनप्रपंचोपन्यासैरेव निरस्तत्वात्, यथा—

[१३०] "देवागमनभोयान-चामरादिविभूतयः।
मायाविष्वपि दृश्यन्ते, नातस्त्वमसि नो महान्॥" (६२)

अथ 'यथाऽनादेरपि सुवर्णमलस्य क्षारमृत्पुटपाकादिप्रक्रियया विशोध्यमानस्य निर्मलत्वमेवमात्मनोऽपि निरन्तरज्ञानाद्यभ्यासेन विगतमलत्वात् किं न सम्भवेत्? इति मतिः,' तदपि न, न ह्यभ्यासमात्रसाम्ये शुद्धेरपि तादवस्थ्यम्, यदुक्तम्—

+ 'स्य मानं वचो भवेत्' घ.।

१३० आप्तमीमांसा श्लो० १, अष्टसहस्री पृ ३।

गरुत्मच्छाखामृगयो-र्लङ्घनाभ्याससम्भवे ।
समानेऽपि समानत्वं, लङ्घनस्य न विद्यते ॥ (६३)

न च सुतरां चरणशक्तिमानपि पङ्गुरखर्वपर्वतशिखरमधिरोढुं क्षमः, उक्तं च—

[131] " दशहस्तान्तरं व्योम्नो, यो नामोत्प्लुत्य गच्छति ।
न योजनशतं गन्तुं शक्तोऽभ्यासशतैरपि ॥ " (६४)

अथ मा भवतु मानुषस्य सर्वज्ञत्वं ब्रह्मविष्णुमहेश्वरादीनामस्तु, ते हि देवाः, सम्भवत्यपि[*] तेष्वतिशयसम्पत् । यत् कुमारिलः—

[132] " अथापि× वेददेहत्वाद्, ब्रह्मविष्णुमहेश्वराः ।
कामं भवन्तु सर्वज्ञाः, सार्वज्ञ्यं मानुषस्य किम् ॥" (६५) इति

तदपि न, रागद्वेषमूलनिग्रहानुग्रहग्रस्तानामसम्भाव्यमिदमेषामिति । न च प्रत्यक्षं तत्साधकं, 'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिने'ति वचनात्, न चानुमानं, प्रत्यक्षदृष्ट एवार्थे तत्प्रवृत्तेः, न चागमः, सर्वज्ञस्यासिद्धत्वेन तस्यापि विवादास्पदत्वात्, न चोपमानं, तदभावादेव, अर्थापत्तिरपि न, सर्वज्ञसाधकस्यान्यथानु-

१३१. तत्त्वसंग्रह. भा. २, पृ २२६, श्लो० ३१६८, तत्रोत्तरार्द्धे " न योजनमसौ गन्तु " मिते पाठ । (गा० सि० बरोडा)

*. °वन्त्यपि तेष्वतिशयसम्पदः । यत् ध. । × °पि ते विदेहत्वाद् ध । °पि दिव्यदेहत्वाद् ध० वृ० पृ. ११६/१ ।

१३२. प्रमाणमीमांसा पृ. २१ । तत्त्वसंग्रह भा० २, पृ. ८३६, श्लो० ३२०८, तत्रोत्तरार्द्धे " सर्वज्ञानमयाद्देहात्सर्वज्ञा मानुषस्य किम् ॥ " इति दृश्यते ।

पपन्नलिङ्गस्यादर्शनात्, [+] यदि[133] परमभावप्रमाणगोचरः सर्वज्ञ इति स्थितम्, प्रयोगश्चात्र नास्ति सर्वज्ञः, प्रत्यक्षादिप्रमाणगोचरातिक्रान्तत्वात्, शशशृङ्गवदिति ॥ ६८ ॥

अथ कथं यथावस्थिततत्त्वज्ञाननिर्णयः ? इत्याह—

**तस्मादतीन्द्रियार्थानां, साक्षाद्द्रष्टुरभावतः ।**
**नित्येभ्यो वेदवाक्येभ्यो, यथार्थत्वविनिर्णयः [*] ॥६९॥**

व्याख्या—तस्मात् प्रामाणिकपुरुषाभावात्, अतीन्द्रियार्थानां चक्षुरगोचरपदार्थानां साक्षाद् द्रष्टुर्ज्ञातुः सर्वज्ञादेः पुरुषस्याभावात्, नित्येभ्यः शाश्वतेभ्यो वेदवाक्येभ्योऽपौरुषेयवचनेभ्यो यथार्थत्वविनिर्णयो यथावस्थितपदार्थधर्मादिस्वरूपविवेचनं 'भवती'त्यध्याहारः । अपौरुषेयत्वं च वेदानाम्—

"[134] अपाणिपादो ह्यमनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति विश्वं न च तस्य वेत्ता, तमाहुरग्र्यं पुरुषं महान्तम् ॥" (६६

---

+ °भ° प्र. । °पदार्थस्या° वृ० चू० पृ ११६/१ ।

१३३. "ततः प्रमाणपञ्चकाप्रवृत्तेरभावप्रमाणगोचर एव सर्वज्ञः," ( वृ० चू० पृ. ११६/१

* °निश्चयः घ ।

१३४. "श्वेताश्वतरोपनिषद् ३–१९" इति प्र० मी० पृ. २०, तत्र 'ह्यमनो' इत्यस्य स्थाने 'जवनो,' 'विश्वम्' इत्यस्य स्थाने 'वेद्यम्'

इत्यादिभावनया रागद्वेषादिदोषतिरस्कारपूर्वकं भावनीय-मिति ॥ ६९ ॥

अथ यथावस्थितार्थव्यवस्थापकं तत्त्वोपदेशमाह—

**अत एव पुरा कार्यो, वेदपाठः प्रयत्नतः ।**
**ततो धर्मस्य जिज्ञासा, कर्त्तव्या धर्मसाधनी ॥७०॥**

व्याख्या—यतो हेतोर्वेदाभिहितानुष्ठानादेव तत्त्वनिर्णयोऽत एव पुरा पूर्वं प्रयत्नतो यत्नाद्वेदपाठःकार्यः, ऋग्-यजुः-सामा-ऽथर्वाणो वेदास्तेषां पाठः–कण्ठपीठलुठत्पाठप्रतिष्ठा, न तु श्रवण-मात्रेण सम्यगवबोधस्थिरता। ततोऽनन्तरं धर्मसाधनी, 'धर्मः' पुण्योपचयहेतुः, धर्मस्य हेयोपादेयस्वरूपस्य वेदाभिहितस्य जिज्ञासा ज्ञातुमिच्छा कर्त्तव्या वेदोक्ताभिधेयविधाने यतितव्य-मित्यर्थः ॥ ७० ॥

वेदोक्तधर्मोपदेशमेवाह[1]—

**नोदनालक्षणो धर्मो, नोदना तु क्रियां प्रति ।**
**प्रवर्त्तकं वचः प्राहुः, स्वःकामोऽग्निं यथा यजेत्[2]॥७१॥**

व्याख्या—नोदनैव लक्षणं यस्य स नोदना लक्षणो धर्मः, तत्स्वरूपमेव सूत्रकृदाह–तु पुनर्नोदना क्रियां प्रति प्रवर्त्तकं वचः

१. °शमाह घ. । २. यजेद्यथा ॥ पु ।

प्राहुः, वेदोक्तस्वर्गादिसाधकाम्नायस्य क्रियाप्रवर्त्तकं वचनं नोदनामाहुरित्यर्थः । शिष्यानुकम्पया तत्सूत्रेणैव दृष्टान्तयन्नाह–स्वःकामोऽग्निं + यथा यजेत्, 'यथा'–येन प्रकारेण 'स्वःकामः'–स्वर्गाभिलाषी जनोऽग्निं यजेत्–अग्निं कार्यं कुर्यात्, यथाहुस्तत्सूत्रम्–" अग्निहोत्रं जुहुयात् स्वर्गकामः ' इति ॥ ७१ ॥

प्रमाणान्याह—* [१३५]

प्रत्यक्षमनुमानं च, शाब्दं चोपमया सह ।
अर्थापत्तिरभावश्च, षट् प्रमाणानि जैमनेः ॥७२॥

---

+ यजेद्यथा, यथा येन पु. । * °न्याहुः घ. ।

१३५ " अथ विशेषलक्षणं प्रमाणस्याभिधानीयं, तच्च सामान्यलक्षणाविनाभूतम्, ततः प्रथमं प्रमाणस्य सामान्यलक्षणमभिधीयते–" अनधिगतार्थाधिगन्तृ प्रमाणम् " इति, अनधिगतो–अगृहीतो योऽर्थो–बाह्यः स्तम्भादिस्तस्याधिगन्तृ–आधिक्येन संशयादिव्युदासेन परिच्छेदकम्, अनधिगतार्थाधिगन्तृ–प्रागज्ञातार्थपरिच्छेदकं, समर्थविशेषणोपादानाज्ज्ञानं विशेष्यं लभ्यते, अगृहीतार्थग्राहकं ज्ञानं प्रमाणमित्यर्थः, अत्र ' अनधिगत ' इति पदं धारावाहिज्ञानानां गृहीतग्राहिणां प्रामाण्यपराकरणार्थम्, ' अर्थ ' इति ग्रहणं संवेदनं स्वसंविदितं न भवति, स्वात्मनि क्रियाविरोधात्, किन्तु नित्यं परोक्षमेवेति ज्ञापनार्थम्, तच्च परोक्षं ज्ञानं भाट्टमतेऽर्थप्राकट्यफलानुमेयं, भाट्टप्रभाकरमते संवेदनाख्यफलानुमेयं वा

व्याख्या—जैमनेर्वेदान्तवादिनः षट् प्रमाणानि ज्ञेयानीति सम्बन्धः। यद्यपि प्रभाकराणां मते पञ्चैव प्रमाणानि, भाट्टानामेव षट्, तथाप्यत्र ग्रन्थकृत्सामान्यतः षट्संख्यामाचष्टे। प्रमाणनामानि निगदसिद्धान्येव ॥ ७२ ॥

निरुक्तमाह—

**तत्र प्रत्यक्षमक्षाणां, सम्प्रयोगे सतां मतिः।**
**आत्मनो बुद्धिजन्मेत्य—नुमानं लैङ्गिकं पुनः ॥७३॥**

व्याख्या—तत्र प्रमाणषट्के अक्षाणामिन्द्रियाणां सम्प्रयोगे पदार्थैः सह संयोगे सतामनुपहतेन्द्रियाणां या मतिर्बुद्धिरिदमिदमि-[१३६]त्यवबोधस्तत्प्रत्यक्षं प्रमाणं 'भवती'त्यध्याहारः। यत्तदावनुक्तावप्यर्थ-सम्बन्धाद् ज्ञेयौ, सतामिति—विदुषामदुष्टेन्द्रियाणामित्यर्थः, एतावता मरुमरीचिकायां जलभ्रमः शुक्तौ रजतभ्रमश्च इन्द्रियार्थसम्प्रयोगजोऽपि द्रष्टुरविकलेन्द्रियत्वाभावान्न प्रत्यक्षं तत्प्रमाणकोटि-

प्रतिपत्तव्यम्। अथ प्रमाणस्य विशेषलक्षणं विवक्षुः प्रथमं तन्नामानि तत्संख्यां चाह।" (वृ. वृ. पृ. ११७)

१३६. 'अत्र जैमिनीयसूत्र (४ मिद—"सत्संप्रयोगे सति पुरुषस्ये न्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्" इति" वृ० वृ० पृ ११८/१। "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" (मीमांसादर्शन १—१—४) इति प्र० मी० पृ. २५।

मधिशेते । अनुमानमाह—आत्मनो बुद्धिजन्मेत्यनुमानं पुनर्लैङ्गिकम्, आत्मा यदनुमिमीते स्वयं तदनुमानमित्यर्थः, अनुमानलैङ्गिकयोः शब्दाभेदेऽपि[1] 'अनुमीयत इत्यनुमानं लिंगाज्जातं लैङ्गिकमिति व्युत्पत्तिभेदाद्भेदो ज्ञेयः, उभयशब्दकथनं तु बालावबोधनार्थमेव[2] ॥ ७३ ॥

शाब्दं शाश्वतवेदोत्थ—मुपमानं प्रकीर्त्तितम् ।
प्रसिद्धार्थस्य साधर्म्या—दप्रसिद्धस्य साधनम् ॥७४॥

व्याख्या—शाब्दमागमप्रमाणं शाश्वतवेदोत्थं 'शाश्वता'न्नित्याद्वेदाज्जातमागमप्रमाणमित्यर्थः, शाश्वतत्वं च वेदानामपौरुषेयत्वादेव । उपमानमाह—यत् प्रसिद्धार्थस्य प्रतीतपदार्थस्य साधर्म्यात् साम्यादप्रसिद्धस्य वस्तुनः साधनं तदुपमानं प्रमाणं प्रकीर्त्तितं कथितं, यथा—प्रसिद्धगोगवयस्वरूपो वनेचरोऽप्रसिद्धगवयस्वरूपं नागरिकं प्राह—'यथा गौर्गवयस्तथेति, 'यथा गोः खुरककुदलाङ्गूलसास्नादिमन्तं पदार्थं गामिति जानासि गवयोऽपि

---

१ शाब्दामे' घ. । २. बोधार्थं° घ. । ३ तु की° घ. । ४. °द्धवस्तुसा° घ. । ५. °णं कीर्ति° घ. । ६. यथा गौस्तथा गवय इति यथा गोः °ं ।

तथास्वरूपो ज्ञेयः,' इत्युपमानम् । अत्र मूत्रानुक्तावपि यत्तदावर्य-सम्बन्धार्थमध्याहार्यौ ॥ ७४ ॥

अर्थापत्तिमाह—

**दृष्टार्थानुपपत्त्या तु, कस्याप्यर्थस्य कल्पना ।**
**क्रियते यद्बलेनासा—वर्थापत्तिरुदाहृता ॥७५॥**

व्याख्या—असौ पुनरर्थापत्तिरुदाहृता—कथिता, अर्थापत्तिः प्रमाणं प्रोक्तमित्यर्थः, [×]

यद्बलेन कस्याप्यदृष्टस्यार्थस्य कल्पना क्रियते—सङ्घटना विधीयते, कया ? दृष्टार्थानुपपत्त्या, 'दृष्टः' परिचितः प्रत्यक्षलक्ष्यो योऽर्थो देवदत्ते पीनत्वादिस्तस्य 'अनुपपत्त्या' अघटमानतयाऽन्यथानुपपत्त्येत्यर्थः, यथा—'पीनो देवदत्तो दिवा न भुंक्ते' [ रात्रावश्यं भुंक्त इत्यर्थः ]—इत्यत्र दृष्टं पीनत्वं विना भोजनं दुर्घटम्, दिवा च न भुंक्ते,[137] अतो रात्रावश्यमदृष्टं भोजनं ज्ञापयतीत्यर्थापत्तिः प्रमाणम् ॥ ७५ ॥

---

उक्तं च+—
" ×वह्निर्भाव(चा)विनाभूतो. गृहे(ऽ)भावोऽवधारितः ।
जीवतोऽतोऽनुमानं स्या—दर्थापत्तिरपि ध्रुवम् ॥ "
+ इत्यधिकं ज. प्रतौ ।

१३७ " अत्रेदं सूत्रं—" अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यदृष्टार्थकल्पना " इति, अत्र प्रमाणपञ्चकेन दृष्टः शब्देन श्रुतश्चार्थौ मिथो वैलक्षण्यज्ञापनार्थं पृथक्कृत्योक्तौ स्तः, शेषं तुल्यम्, इदमुक्तं भवति—

*अभावप्रमाणमाह—

**प्रमाणपञ्चकं यत्र, वस्तुरूपे न जायते।**
**×वस्तुसत्तावबोधार्थं, तत्राभावप्रमाणता ॥७६॥**

प्रत्यक्षादिप्रमाणषट्कविज्ञातोऽर्थो येन विना नोपपद्यते तस्यार्थस्य कल्पनमर्थापत्तिः, तत्र प्रत्यक्षपूर्विकार्थापत्तिर्यथा—अग्नेः प्रत्यक्षेणाष्णस्पर्शमुपलभ्य दाहकशक्तियोगोऽर्थापत्त्या प्रकल्प्यते, न हि शक्तिरध्यक्षपरिच्छेद्या नाप्यनुमानादिसमधिगम्या, प्रत्यक्षया शक्त्या सह कस्यचिदर्थस्य सम्बन्धासिद्धेः, अनुमानपूर्विकार्थापत्तिर्यथा—आदित्यस्य देशान्तरप्राप्त्या देवदत्तस्येव गत्यनुमाने, ततोऽनुमानाद्गमनशक्तियोगोऽर्थापत्त्यावसीयते, उपमानपूर्विकार्थापत्तिर्यथा—गवयवद्गौरित्युक्तेरर्थाद्वाहदोहादिशक्तियोगस्तस्य प्रतीयतेऽन्यथा गोत्वस्यैवायोगात्, शब्दपूर्विकार्थापत्तिः श्रुतार्थापत्तिरितीतरनामिका यथा—शब्दादर्थप्रतीतौ शब्दस्यार्थेन सम्बन्धसिद्धिः, अर्थापत्तिपूर्विकार्थापत्तिर्यथा—उक्तप्रकारेण शब्दस्यार्थेन सम्बन्धसिद्धावर्थान्नित्यत्वसिद्धिः पौरुषेयत्वे शब्दस्य ( अर्थेण सह ) सम्बन्धायोगात्, अभावपूर्विकार्थापत्तिर्यथा—जीवतो देवदत्तस्य गृहेऽदर्शनादर्थाद्बहिर्भावः। अत्र च चतसृभिरर्थापत्तिभिः शक्तिः साध्यते, पञ्चम्या नित्यता, षष्ठ्या गृहाद्बहिर्भूतो देवदत्त एव साध्यते इत्येवं षट्प्रकारार्थापत्तिः। अन्ये तु श्रुतार्थापत्तिमन्यथोदाहरन्ति—पीनो देवदत्तो दिवा न भुंक्त इति वाक्यश्रवणाद्रात्रिभोजनवाक्यप्रतीतिः श्रुतार्थापत्तिः।

× वस्त्वसत्ता° ध.। * अथाभा° प्र.।

व्याख्या—यत्र वस्तुरूपे अभावादौ पदार्थे प्रमाणपञ्चकं पूर्वोक्तं न प्रवर्त्तते न जायते तत्राभावप्रमाणता ज्ञेयेति सम्बन्धः। [1]किमर्थम्? इत्याह—वस्तुसत्तावबोधार्थं, 'वस्तुनो'ऽभावरूपस्य मुण्डभूतलादेः, 'सत्ता' घटाद्यभावसद्भावः, तस्य 'अवबोधः' प्रामाणिकपथावतारणं, 'तदर्थं' तद्धेतोरित्यर्थः। ननु—कथमभावस्य प्रामाण्यं? प्रत्यक्षं तावद्'भूतलमेवेदं घटादि न भवती'त्यन्वयव्यतिरेकद्वारेण वस्तुपरिच्छिदंस्तदधिकं विषयमभावैकरूपं निराचष्टे इति किं विषयमाश्रित्याभावप्रामाण्यं स्यात्?' नैवं [2]घटाभावप्रतिबद्धभूतलग्रहणासिद्धेः, [3]तदुक्तम्—

१३८ "न तावदिन्द्रियेणैषा, 'नास्ती'त्युत्पद्यते मतिः।
भावांशेनैव संयोगो, योग्यत्वादिन्द्रियस्य हि॥ (६७)

गृहीत्वा वस्तुसद्भावं, स्मृत्वा च प्रतियोगिनम्।
मानसं 'नास्तिता'ज्ञानं, जायतेऽक्षानपेक्षया॥' (६८)

---

इयं च षट्प्रकाराप्यर्थापत्तिर्नाध्यक्षमतीन्द्रियशक्त्याद्यर्थविषयत्वात्, अत एव नानुमानमपि, प्रत्यक्षपूर्वकत्वात्तस्य, ततः प्रमाणान्तरमेवार्थापत्तिः सिद्धा।" इति बृ. टृ. तो विज्ञेयम्, पृ. ११९।

१ किमित्याह ज। २ °टाद्यभाव° घ.। ३ यदुक्तम् ज.।

१३८ "श्लोकवार्त्तिकम् ५. अभावपरिच्छेदे श्लो० १८" इति प्र० मी० पृ. १५। एतदन्तरं च वृत्तं न (६८) "श्लो० २७" इति तत्रैव।

इति नास्तिताज्ञानग्रहणावसरे प्रामाण्यमेवाभावस्य केवलम्। भावांश इन्द्रियसन्निकर्षजत्वेन पञ्चप्रमाणगोचरचरिष्णुतामनुभव-न्नाबालगोपालाङ्गनाप्रसिद्धं व्यवहारं प्रवर्त्तयति, अभावांशस्तु प्रमाणपञ्चकविषयबहिर्भूतत्वात्केवलभूतलग्रहणाद्युपयोगित्वादभाव-प्रमाणव्यपदेशमश्नुत इति सिद्धमभावस्यापि युक्तियुक्ततया प्रामाण्यमिति ॥ ७६ ॥

उपसंहरन्नाह—

जैमनीयमतस्यापि, संक्षेपोऽयं निवेदितः ।
एवमास्तिकवादानां, कृतं संक्षेपकीर्त्तनम् ॥७७॥

व्याख्या—अपि शब्दान्न केवलमपरदर्शनानां जैमनीयमत-स्यापि अयं संक्षेपो निवेदितः कथितः। [१३९] वक्तव्यस्य बाहुल्यात् टीकामात्रे सामस्त्यकथनायोगात् संक्षेप एव[+] प्रोक्तोऽस्ति। अथ सूत्रकृत्सम्मतं संक्षेपमुक्त्वा निगमनमाह–एवमिति, 'एव' मित्यम्, आस्तिकवादिनामिह परलोकगतिपुण्यपापास्तिक्यवादिनां बौद्ध-नैयायिकसांख्यजैनवैशेषिकजैमनीयानां संक्षेपकीर्त्तनं कृतं-संक्षेपेण वक्तव्यमभिहितमित्यर्थः ॥ ७७ ॥

---

१३९. "वक्तव्यस्य बाहुल्यादल्पीयस्यस्मिन्सूत्रे समस्तस्य वक्तुमशक्यत्वात्संक्षेप एव प्रोक्तः।" इति बृ वृ पृ ११११

+ 'घ कथितोऽस्ति जं।

विशेषान्तरमाह--

**नैयायिकमतादन्ये, भेदं वैशेषिकैः सह ।**
**न मन्यन्ते मते तेषां, पञ्चैवास्तिकवादिनः ॥७८॥**

व्याख्या—अन्ये[1] आचार्या नैयायिकमताद्वैशेषिकैः सह भेदं न मन्यन्ते-दर्शनाधिष्ठात्रेक[2]देवतत्वात्[140] पृथग्दर्शनं नाभ्युपगच्छन्ति, तेषां मतापेक्षया आस्तिकवादिनः पञ्चैव ॥७८॥

१ °न्ये चाचार्या ध. । २. °त्रै° जं. ध. प्र. ।

१४० " एकदेवतत्त्वेन तत्त्वानां मिथोऽन्तर्भावेनाल्पीयस एव भेदस्य भावाच नैयायिकवैशेषिकाणां मिथो मतैक्यमेवेच्छन्तीत्यर्थः।" बृ०वृ० पृ. १२१ ।

" अत्र बृहद्वृत्तिः-" जैमिनीया वेषेण साङ्ख्या इवैकदण्डात्रिदण्डा धातुरक्तवाससो मृगचर्मोपवेशनाः कमण्डलुधराः मुण्डशिरसः संन्यासिप्रभृतयो द्विजाः, तेषां* वेद एव गुरुर्न पुनरन्यो वक्ता गुरुः, त एव स्वयं [ तत्र ] ' संन्यस्तं संन्यस्तमिति भाषन्ते, यज्ञोपवीतं च प्रक्षाल्य त्रिर्जलं पिबन्ति । ते द्विधा—एके याज्ञिकादयः पूर्वमीमांसावादिनः, अपरे तूत्तरमीमांसावादिनः। तत्र पूर्वमीमांसावादिनः कुकर्मविवर्जिनो यजनादिषट्कर्मकारिणो ब्रह्मसूत्रिणो गृहस्थाश्रमसंस्थिता शूद्रान्नादिवर्जका भवन्ति, ते च द्वेधा भाट्टाः प्राभाकराश्च,

* " वेद एव गुरुस्तेषां, वक्ता कश्चित्परो नहि । ततः स्वयं ते संन्यस्तं संन्यस्तमिति भाषिणः ॥ ६७ ॥ " ( राजशे० ष० स० पृ. ७ )

षट्पञ्चप्रमाणप्ररूपिणः, ये तूत्तरमीमांसावादिनस्ते वेदान्तिनो ब्रह्माद्वैतमेव मन्यन्ते, ' सर्वमेतदिदं ब्रह्म ' इति भाषन्ते, प्रमाणं च यथा तथा वदन्ति, एक एवात्मा सर्वशरीरेषूपलभ्यते इति जल्पन्ति–" एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ " इति वचनात्, " पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यम् " इति वचनाच्च, आत्मन्येव लयं मुक्तिमाचक्षते, न त्वपरां कामपि मुक्तिं मन्यन्ते, ते च द्विजा एव भगवन्नामधेयाश्चतुर्धाभिधीयन्ते–कुटीचरबहूदकहंसपरमहंसभेदात्, तत्र त्रिदण्डी सशिखो ब्रह्मसूत्री गृहत्यागी यजमानपरिग्रही सकृत्पुत्रगृहेऽश्नन् कुट्यां निवसन् कुटीचर उच्यते, कुटीचरतुल्यवेषो विप्रगेहनैरस्यभिक्षाशनो+ विष्णुजापपरो नदीनीरस्नायी बहूदकः कथ्यते, ब्रह्मसूत्रशिखाभ्यां रहितः कषायाम्बरदण्डधारी ग्रामे चैकरात्रं नगरे च त्रिरात्रं निवसन् विधूमेषु विगताग्निषु विप्रगेहेषु भिक्षां भुञ्जानस्तपःशोषितविग्रहो देशेषु भ्रमन् हंसः समुच्यते, हंस एवोत्पन्नज्ञानश्चातुर्वर्ण्यगेहभोजी स्वेच्छया दण्डधार ईशानीं दिशं गच्छन् शक्तिहीनतायामनशनग्राही वेदान्तैकध्यायी परमहंसः समाख्यायते, एतेषु चतुर्षु परः परोऽधिकः, एते च चत्वारोऽपि केवलब्रह्माद्वैतवादसाधनैकव्यसनिनः शब्दार्थयोर्निरासायानेका युक्तीः स्फोरयन्तोऽनिर्वाच्यतत्त्वे यथा व्यवतिष्ठन्ते तथा खण्डनतर्कादभियुक्तैरवसेयम्, नात्र तन्मतं वक्ष्यते। इह तु सामान्येन शास्त्रकारः पूर्वमीमांसा-

+ " कुटीचरो मठवासी यजमानपरिग्रही। बहूदको नदीतीरे स्नातो नैरस्यभैक्ष्यभुक् ॥ ७४ ॥ (राजसे० ष० स० पृ. ७)

दर्शनानां च षट्संख्या जगति प्रसिद्धा, सा संख्या कथं फलवती ? इत्याह–

**षष्ठदर्शनसंख्या तु, पूर्यते तन्मते किल ।**
**लोकायतमतक्षेपात्, कथ्यते तेन तन्मतम् ॥७९॥**

व्याख्या—ये नैयायिकवैशेषिकयोरेकरूपत्वेनाभेदं मन्यमाना दर्शनपञ्चकमेवाचक्षते तन्मते षष्ठदर्शनसंख्या लोकायतमतक्षेपात् पूर्यते, 'तुः' पुनरर्थे, किलेति परमाप्ताम्नायवे, तेन कारणेन तन्मतं चार्वाकमतं कथ्यते, तत्स्वरूपमुच्यत इति ॥७९॥

---

ादिमतमेव विभणिषुरेवमाह " ( पृ. ११५ )

" अनधिगतार्थाधिगन्तृ प्रमाणं, पूर्वं पूर्वं प्रमाणमुत्तरं तु फलं, सामान्य-विशेषात्मकं वस्तु प्रमाणगोचरम्, नित्यपरोक्षं ज्ञानं हि भाट्टप्रभाकरमतयोरर्थ-प्राकट्याख्यसंवेदनाख्यफलानुमेयम्, वेदोऽपौरुषेयः, वेदोक्ता हिंसा धर्माय, शब्दो नित्यः, सर्वज्ञो नास्ति, अविद्याऽपरनाममायावशात्प्रतिभासमानः सर्वः प्रपञ्चोऽपरमार्थिकः, परब्रह्मैव परमार्थसत् । " ( पृ. १२१।१ )

तथा च–" प्रपञ्चमिथ्या कठवल्लिका च, ख्यातं जने भागवतं पुराणम् । इत्यादिशास्त्राणि बहूनि तेषां, तत्सम्प्रदायस्तु कृशोऽत्र लोके ८३ ॥ " इति राजशे० प० द० स० पृ. ८ ।

१४१
तदेवाह—

**लोकायता वदन्त्येवं, नास्ति देवो न निर्वृतिः ।**
**धर्माधर्मौ न विद्येते, न फलं पुण्यपापयोः ॥८०॥**

व्याख्या—लोकायता नास्तिका एवममुना प्रकारेण वदन्ति, कथम् ? इत्याह–देवः सर्वज्ञादिर्नास्ति, निर्वृत्तिर्मोक्षो

---

१४१ " प्रथमं नास्तिकस्वरूपमुच्यते–कापालिका भस्मोद्धूलनपरा योगिनो ब्राह्मणाद्यन्त्यजान्ता केचन नास्तिका भवन्ति, ते च जीवपुण्यपापादिकं न मन्यन्ते, चतुर्भूतात्मकं जगदाचक्षते, केचित्तु चार्वाकैकदेशीया आकाशं पञ्चमं भूतमभिमन्यमानाः पञ्चभूतात्मकं जगदिति निगदन्ति, तन्मते भूतेभ्यो मदशक्तिवच्चैतन्यमुत्पद्यते, जलबुद्बुदवज्जीवाः, चैतन्यविशिष्टः कायः पुरुष इति, ते च मद्यमांसे भुञ्जते मात्राद्यगम्यगमनमपि कुर्वते, वर्षे वर्षे कस्मिन्नपि दिवसे सर्वे संभूय यथानामनिर्गमं स्त्रीभिरभिरमन्ते, धर्मं कामादपरं न मन्वते, तन्नामानि चार्वाका लोकायता इत्यादीनि, ' गल चर्व अदने ' चर्वन्ति भक्षयन्ति तत्त्वतो न मन्यन्ते पुण्यपापादिकं परोक्षं वस्तुजातमिति चार्वाकाः, " मयाकस्यामाक " इत्यादिसिद्धहैमोणादिदण्डकेन शब्दनिपातनम् , लोकाः–निर्विचाराः सामान्यलोकास्तद्वदाचरन्ति स्मेति लोकायता लोकायतिका इत्यादि, बृहस्पतिप्रणीतमतत्वेन बार्हस्पत्याश्चेति, अथ तन्मतमेवाह । " बृ० वृ० प १२१ )

नास्ति, अन्यच्च न विद्येते, कौ ? धर्माधर्मौ, 'धर्मश्च' 'अधर्म'श्चेति द्वन्द्वः, पुण्यपापे सर्वथा न स्त इत्यर्थः । पुण्यपापयोर्धर्म्माधर्मयोः फलं स्वर्गनरकादिरूपं नेति नास्ति, तदपि पुण्यपापयोरभावे कौतस्त्यं तत्फलम् ?[१४२] इत्यर्थः ॥ ८० ॥

[१४३]तच्छास्त्रोक्तमेव सौलुण्ठं दर्शयन्नाह, तथा च तन्मतम्—

"एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः ।
भद्रे! वृकपदं पश्य, यद्वदन्ति बहुश्रुताः ॥८१॥"

व्याख्या—तथा चेत्युपदर्शने, तन्मतं भरतावान्नास्तिकमतं, कथम् ? इत्याह—अयं लोकः संसारः, एतावानेव एतावन्मात्र एव, यावान् यावन्मात्र, इन्द्रियगोचरः इन्द्रिय स्पर्शनरसनघ्राणचक्षुःश्रोत्रभेदात् पञ्चविधम्, तस्य 'गोचरो' विषयः, पञ्चेन्द्रियव्यक्तीकृतमेव वस्त्वस्ति नापरं [१]किञ्चन, अत्र 'लोक'ग्रहणाल्लोकस्यपदार्थसार्थसङ्ग्रहः । यच्चापरे पुण्यपापसाध्यं स्वर्गनरकाद्याहुस्तदप्रमाणं, प्रत्यक्षाभावादेव, 'अप्रत्यक्षमप्यस्ती'ति चेत् शशशृङ्गवन्ध्या-

१४२. "धर्माधर्मयोरभावे कुतस्त्यं तत्फलम्? इत्यर्थः" इति वृ० चू० पृ १२२/१ ।

१४३. "सौलुण्ठं यथा ते स्वशास्त्रे प्रोचिरे तथैव दर्शयन्नाह" इति वृ० चू० पृ. १२२/१ ।

१. किञ्चित् । अत्र ध. ।

स्तनन्धयादीनामपि भावोऽस्तु, तथा हि–स्पर्शनेन्द्रियेण तावद् मृदुकठोरशीतोष्णस्निग्धरूक्षादिभावा उपलभ्यन्ते, रसनेन्द्रियेण तिक्तकटुकषायाम्लमधुरास्वादालेह्यभू(भ)क्ष्यपेयादयो वेद्यन्ते, घ्राणेन्द्रियेण मृगमदमलयजघनसारागरुप्रभृतिसुरभिवस्तुपरिमलोद्गारपरम्पराः परिचीयन्ते, चक्षुरिन्द्रियेण भूभूधरपुरप्राकारघटपटस्तम्भकुम्भाम्भोरुहादिमनुष्यपशुश्वापदादिस्थावरजङ्गमपदार्थसार्थी अनुभूयन्ते, श्रोत्रेन्द्रियेण तु× प्रतिष्ट(ष्ठ)गायकपथपथिकप्रध्यमानतालमानमूर्च्छना प्रेङ्खोलनाखेलन्मधुरध्वनय आकर्ण्यन्ते, इति पञ्चप्रकारप्रत्यक्षदृष्टमेव वस्तुतत्त्वं प्रमाणपदवीमवगाहते, शेषप्रमाणानामनुभावाभावादेव निरस्तत्वात्, गगनकुसुमवत्। ये चास्पृष्टमनास्वादितमनाघ्रातमदृष्टमश्रुतमप्याद्रियमाणाः स्वर्गमोक्षादिसुखपिपासानुबन्धबद्धचेतोवृत्तयो दुश्चरतरतपश्चरणादिकष्टपिष्टिकया स्वजन्म क्षपयन्ति तन्महासाहसं तेषामिति। किं चाप्रत्यक्षमप्यऽस्ति तयाऽभ्युपगम्यते[1] चेज्जगदनुपद्रुतमेव स्यात्–दरिद्रो हि 'सुवर्णराशिर्मेऽस्ती'त्यनुध्याय हेलयैव दौःस्थ्यं दलयेत्, दासोऽपि स्वचेतसि स्वामितामवलम्ब्य स्वस्य किङ्करतां निराकुर्या-

× तु गीततालमान° ध। तु प्रथि° ज.।
१ °या चेदभ्युप° ध।
२ °ते तज्जगद° ध.।

दिति न कोऽपि स्वानभिमतमालिन्यमश्नुवीत, एवं न कस्यचित् सेव्यसेवकभावो दरिद्रिधनिभावो वा स्यात्, तथा च जगद्व्यवस्थालोपप्रसङ्ग इति सुस्थितमिन्द्रियगोचर एव प्रमाणम्। ये चानुमानागमादिप्रामाण्यमनुमन्वानाः पुण्यपापन्यापप्राप्यस्वर्गनरकादिसुखासुखं व्यवस्थापयन्तो वाचाटा न विरमन्ति तान् प्रति दृष्टान्तमाह–भद्रे ! वृकपदं पश्येति[१४४], यथा हि कश्चित् पुरुषो वृकपददर्शन-

१४४ " अत्रायं संप्रदायः–कश्चित्पुरुषो नास्तिकमतवासनावासितान्तःकरणो निजां जायामास्तिकमतनिबद्धमतिं स्वशास्त्रोक्तयुक्तिभिरभियुक्तः प्रत्यहं प्रतिबोधयति, सा तु यदा न प्रतिबुध्यते तदा स 'इयमनेनोपायेन प्रतिभोत्स्यत' इति स्वचेतसि विचिन्त्य निशायाः पश्चिमे यामे तया समं नगरान्निर्गत्य तां प्रत्यवादीत्–' प्रिये ! य इमे नगरवासिनो नराः परोक्षविषयेऽनुमानादिप्रामाण्यमाचक्षाणा लोकेन च बहुश्रुततया व्यवह्रियमाणा विद्यन्ते पश्य तेषां चारुविचारणायां चातुर्य'मिति, ततः स नगरद्वारादारभ्य चतुष्पथं यावन्मन्थरतरप्रसृमरसमीरणसमीभूतपांशुप्रकरे राजमार्गे द्वयोरपि स्वकरयोरङ्गुष्ठप्रदेशिनीमध्यमाङ्गुलित्रयं मीलयित्वा स्वशरीरस्योभयोः पक्षयोः पांशुषु न्यासेन वृकपदानि प्रचक्रे, ततः प्रातस्तानि पदानि निरीक्ष्यास्तोको लोको राजमार्गेऽमिलत्, बहुश्रुता अपि ! तत्रागता जनान्प्रत्यवोचन्त–' भो भो वृकपदानामन्यथानुपपत्त्या नूनं निशि वृकः कश्चन वनतोऽत्रागच्छत्' इत्यादि, ततः स तांस्तथा लापमाणान्निरीक्ष्य निजां भार्यां जजल्प–' हे ' भद्रे ' प्रिये वृकपदं, अत्र जाता-

समुत्पन्नकुतूहलां दयितां मन्थरतरमसृमरसमीरणसमीकृतपांशु-प्रकरे स्वकराङ्गुलिन्यासेन वृकपदाकारतां विधाय माह–' हे भद्रे ! वृकपदं पश्य,' कोऽर्थः ? यथा तस्या अविदितपरमार्थाया मुग्धाया विदग्धो वल्लभो वृकचरणनिरीक्षणाग्रहं कराङ्गुलिन्यासमात्रेण प्रलोभ्य पूरितवानेवमन्यपि धार्मिकच्छद्मधूर्त्ताः परवञ्चनप्रवणा यत्किञ्चिदनुमानागमादिदार्ढ्यमादर्श्य व्यर्थं मुग्धजनान् स्वर्गादिप्राप्तिलभ्यभोगाभोगप्रलोभनया भक्ष्याभक्ष्यगम्यागम्यहेयोपादेयादिसङ्कटे पातयन्ति, मुग्धधार्मिकध्यान्ध्यं चोत्पादयन्ति । एवमेवार्थं प्रमाणकोटिमधिरोपयन्तश्च 'यद्बहुश्रुताः परमार्थवेदिनो वदन्ति वक्ष्यमाणपद्येनेत्यर्थः ॥ ८१ ॥

"पिब खाद च[1] जातशोभने!,यदतीतं वरगात्रि ! तन्न ते ।
न हि भीरु! गतं निवर्त्तते, समुदयमात्रमिदं कलेवरम् "
॥ ८२ ॥

व्याख्या—हे[2] जातशोभने ! भावप्रधानत्वान्निर्देशानां जातं

वेकवचनं,' 'पश्य' निरीक्षस्व, किं तदित्याह—यद्वृकपदं वदन्ति जल्पन्त्यबहुश्रुता लोकरूढ्या बहुश्रुता अप्येते परमार्थमज्ञात्वा भाषमाणा अबहुश्रुता एवेत्यर्थः । " इत्यादि वृ० वृ० पृ० १२३।१।)

१. च चारुलोचने! यद॰ ध ।

२. हे चारुलोचने ! चारु(णि) मनोज्ञे लोचने यस्याः तस्याः सम्बोधनम्, पिब ध ।

शोभनत्वं—वदननयनादिचङ्गत्वं यस्याः सेति तत्संबोधनम्, पिब पेयापेयव्यवस्थावैसंस्थुल्येन मदिरादेः[×] पानं कुरु, न केवलं पिब, खाद च भक्ष्याभक्ष्यनिरपेक्षतया मांसादिकं भक्षय, यद्वा 'पिबे'ति अधरादिपानं कुरु, 'खादे'ति भोगानुपभुङ्क्ष्वेति काम्युपदेशः, स्वयौवनं सफलीकुरुत्यर्थः। अथ 'सुलभमेव पुण्यानुभावाद्भवान्तरेऽपि शोभनत्वमि'ति परोक्तमाशंक्याह—यदतीतं वरगात्रि! तन्न ते, हे 'वरगात्रि!' प्रधानाङ्गि! यत् 'अतीतम्' अतिक्रान्तं यौवनादि तत् 'ते' तव भूयो न, किन्तु जराजीर्णत्वमेव भविष्यतीत्यर्थः। 'जातशोभने' 'वरगात्री' ति संबोधनयोः समानार्थयोरप्यादरानुरागातिरेकान्न पौनरुक्त्यदोषः, यदुक्तम्—

" अनुवादादरवीप्साभृशार्थ-विनियोगहेत्वसूयासु।
ईषत्संभ्रमविस्मयगणना-स्मरणेष्वपुनरुक्तम् ॥" (६९)

ननु 'स्वेच्छाऽविच्छिन्नखादने पाने दुस्तरा परलोके कष्टपरम्परा सुलभं च सति सुकृतसञ्चये भवान्तरेऽपि यौवनादिकमि'ति पराशङ्कां दूषयन्नाह—न हि भीरु! गतं निवर्त्तते, हे भीरु! परोक्तमात्रेण नरकादिभाव्य दुःखभयाकुले! 'गतम्' इह भवातिक्रान्तं सुखयौवनादि 'न निवर्त्तते' परलोके न ढौकते, परलोकसुखाकांक्षया तपश्चरणादिकष्टक्रियाभिरिहत्य सुखोपेक्षा व्यर्थेत्यर्थः। अथ 'जन्यजनकसम्बन्धसद्भावादमुना कायेन परलोकेऽपि सहेतुकं

× °रादिपानं ध,।

सुखदुःखादि वेदितव्यमवश्यमेवे'ति चेदाह—समुदयमात्रमिदं कलेवरम्, इदं 'कलेवरं' शरीरं समुदयमात्रं 'समुदयो' मेलो वक्ष्यमाणचतुर्भूतानां संयोगस्तन्मात्रं, 'मात्र' शब्दोऽवधारणे, भूतचतुष्टयसम्बन्ध एव कायो न च पूर्वभवादिसंबद्धशुभाशुभ-कर्मविपाकवेद्यसुखदुःखानुबन्धसव्यपेक्ष इत्यर्थः, संयोगाश्च तरुशिखरावलीलीनशकुनिगणवत् क्षणविनश्वरास्तस्मात् परलोकान-पेक्षतया यथेच्छं पिब खाद चेति वृत्तार्थः ॥ ८२ ॥

चैतन्यमाह—

किञ्च पृथ्वी जलं तेजो, वायुर्भूतचतुष्टयम् ।
चैतन्यभूमिरेतेषां, मानं त्वक्षजमेव हि ॥८३॥

व्याख्या—किञ्च इत्युपदर्शने, पृथ्वी[1] भूमिः, जलमापः, तेजो वह्निः, वायुः पवनः, इति भूतचतुष्टयं तेषां–चार्वाकाणां चैतन्यभूमिः–चेतनोत्पत्तिकारणम्, चत्वार्यपि भूतानि सम्भूय सपिण्डं चैतन्यं जनयन्तीत्यर्थः। तु पुनर्मानं प्रमाणं हि निश्चित-मक्षजमेव–प्रत्यक्षमेवैकं प्रमाणमित्यर्थः ॥ ८३ ॥

ननु भूतचतुष्टयसंयोगजदेहे चैतन्योत्पत्तिः कथं प्रतीयताम्? इत्याशंक्याह—

पृथ्व्यादिभूतसंहत्यां, तथा देहादिसम्भवः ।
मदशक्तिः सुराङ्गेभ्यो, यद्वत् तद्वत् स्थिताऽऽत्मता ॥८४॥

---

१. ॰थ्वी जलं तेजो वायुः–भूमि–जल–वह्नि–पवनाः इति भूत॰ घ. ।

व्याख्या—पृथिव्यादीनि पृथिव्यप्तेजोवायुरूपाणि यानि भूतानि तेषां संहत्यां मेळे संयोगे सति, तथेत्युपदर्शने, देहादिसम्भवः, आदिशब्दादितरे भूभूधरादिपदार्था अपि भूतचतुष्टयसंयोगजा एव ज्ञेयाः। दृष्टान्तमाह—यद्वत् येन प्रकारेण सुराङ्गेभ्यो गुडधातक्यादिभ्यो मद्याङ्गेभ्यो मदशक्तिरुन्मादकत्वं भवति तद्वत् तथाभूतचतुष्टयसम्बन्धात् शरीरे आत्मता स्थिता, सचेतनत्वं जातमित्यर्थः ॥ ८४ ॥

१४५
इति स्थिते यदुपदेशपूर्वकमुपसंहारमाह—

तस्माद् दृष्टपरित्यागा–दृदृष्टे च प्रवर्त्तनम् ।
लोकस्य तद्विमूढत्वं, चार्वाकाः प्रतिपेदिरे ॥८५॥

व्याख्या—तस्मादिति, पूर्वोक्तानुस्मारणपूर्वं तस्मात्[1] ततः कारणाद् दृष्टपरित्यागात् 'दृष्टं' पेयापेयखाद्याखाद्यगम्यागम्यादिरूपं प्रत्यक्षानुमान्यं यत् सुखं तस्य परित्यागात्, 'अदृष्टे' तपश्चरणादिकष्टक्रियासाध्ये परलोकसुखादौ, 'प्रवर्त्तनं' प्रवृत्तिः, चः समुच्चये, यत्तदोर्नित्यत्वात् पूर्वार्द्धे यत्सम्बन्धो ज्ञेयः, तल्लोकस्य 'विमूढत्वम्' अज्ञानत्वं चार्वाका लोकायतकाः 'प्रतिपेदिरे'[2] प्रपन्नाः।

१४५. "एवं स्थिते यथोपदिशन्ति तथा दर्शयन्नाह"—इति वृ० पृ० १२४।

१. °गाद्, यददृष्टे प्र° प.। २ प्रतिप° प.।

मूढलोका हि विमतारकवचनोपन्यासत्रासितज्ञानाः सांसारिकं सुखं परित्यज्य व्यर्थं स्वर्गमोक्षपिपासया तपोजपध्यानहोमादिभिरिहत्यसुखं हस्तगतमुपेक्षन्त इति ॥ ८५ ॥

१४६

साध्याऽऽवृत्तिनिवृत्तिभ्यां, या प्रीतिर्जायते जने।
निरर्था सा मता तेषां÷, सा चाकाशात्परा न हि॥८६॥

व्याख्या—'साध्य'स्य मनीषितस्य कस्यचिद्वस्तुन 'आवृत्तिः' प्राप्तिः कस्यचिद्वस्तुनोऽनभीष्टस्य 'निवृत्ति'रभावस्ताभ्यां जने लोके या प्रीतिर्जायते उत्पद्यते सा तेषां चार्वाकाणां 'निरर्थ(र्था) [का] निरभिप्राया शून्या मता अभीष्टा, परभवार्जितपुण्यपापसाध्यं सुखदुःखादिकं सर्वथा न विद्यत इत्यर्थः। सा× च प्रीतिराकाशाद् गगनात् परा न हि, यथाकाशं शून्यं तथैषापि प्रीतिरभावरूपेत्यर्थः ॥ ८६ ॥

---

१४६ अत्र "अथ ये शान्तरसपूरितस्वान्ता निरुपमं शमसुखं वर्णयन्ति तानुद्दिश्य यच्चार्वाका ब्रुवते तदाह"—इत्यवतरणिका बृ० वृ० पृ. १२५/१।

÷ पा. धर्मः कामात् परो न हि ॥ ध. एवमेव बृ० वृ०।

× सा च प्रीतिराकाशवत् शून्या, यस्मात् कारणात् धर्मः कामादपरः कोऽपि नास्ति, काम एव तत्त्वार्थ इत्यर्थः ॥ उपसंहरन्नाह ध.।

उपसंहरन्नाह—

लोकायतमतेऽप्येवं, संक्षेपोऽयं निवेदितः ।
अभिधेयतात्पर्यार्थः, पर्यालोच्यः सुबुद्धिभिः ॥८७॥

व्याख्या—एवममुना प्रकारेण लोकायतमतेऽपि अयं संक्षेपो निवेदितः, 'अपि' समुच्चये, न केवलमपरमतेषु संक्षेप उक्तो लोकायतमतेऽपि । अथ सर्वदर्शनसम्मतसंग्रहे परस्परं कल्पितानल्पविकल्पजल्परूपे प्ररूपिते किंकर्त्तव्यमूढानां प्राणिनां यत्कर्त्तव्योपदेशमाह—'अभिधेये'ति, सुबुद्धिभिः पंडितैरभिधेयतात्पर्यार्थः पर्यालोच्यः, 'अभिधेयं' कथनीयं मुक्तयद्भवया प्रविपाद्यं यद्दर्शनस्वरूपं तस्य 'तात्पर्यार्थः' सारार्थो विचारणीयः 'सुबुद्धिमि'रिति शुद्धा पक्षपातरहिता बुद्धिर्येषामिति, न तु कदाग्रहग्रहिलैः, यदुक्तम्—

" आग्रही बत निनीषति युक्तिं, तत्र यत्र मतिरस्य निविष्टा । पक्षपातरहितस्य तु युक्ति-र्यत्र तत्र मतिरेति निवेशम् ॥" (७०)इति।

दर्शनानां पर्यन्तैकसारूप्येऽपि पृथक्पृथगुपदेशव्याद्भिमतिसम्भवे विमूढस्य प्राणिनः सर्वस्य पृथक्तया दुर्लभं स्वर्गापवर्गसाधकत्वमतो विमर्शनीयस्तात्त्विकोऽर्थः, यथा च विचारितं चिरन्तनैः—

" श्रोतव्यः सौगतो धर्मः, कर्त्तव्यः पुनरार्हतः ।
वैदिको व्यवहर्त्तव्यो, ध्यातव्यः परमः शिवः ॥ " (७१)

इत्यादि विमृश्य श्रेयस्करं रहस्यमभ्युपगन्तव्यं कुशलमतिभिरिति पर्यन्तश्लोकार्थः। तत्समाप्तौ समाप्ता चेयं श्रीषड्दर्शनसमुच्चयसूत्रटीका ॥८७॥

श्रीरुद्रपल्लीयगणे गणेशः, श्रीचन्द्रसूरिर्गुणराशिरासीत् ।
तद्बन्धुरिन्दुप्रमकीर्त्तिभूरि–र्जीयाच्चिरं श्रीविमलेन्द्रसूरिः ॥ १ ॥
नन्दन्तु श्रीगुरवः, श्रीगुणशेखरमुनीश्वरास्तदनु ।
श्रीसङ्घतिलकसूरि–स्तत्पट्टे जयतु चिरमधुना ॥ २ ॥
तत्पदपयोजभृङ्गो, विद्यातिलको-मुनिनिजस्मृतये ।
षड्दर्शनीयसूत्रे, चक्रे विवृतिं समासेन ॥ ३ ॥
तदनुचितमौच्यत्यत्र, ममादतो मन्दमतिविमर्शाच्च ।
हृदय विधाय मधुरं, तत् सुजनाः शोधयन्तु मयि ॥ ४ ॥
वैक्रमेऽब्दे युग्मनन्द–विश्वदेवप्रमाणिते।
आदित्यवर्द्धनपुरे, शास्त्रमेतत् समर्थितम् ॥ ५ ॥
खेलतोऽम्रू राजहंसौ, यावद्विश्वसरस्तटे ।
तावद्बुधैर्वाच्यमान, पुस्तक नन्दतादिदम् ॥ ६ ॥
सप्ताशीतिश्लोकसूत्र टीकामानं विनिश्चितम्।
सहस्रमेकं द्विशती, द्वापंचाशदनुष्टुभाम् ॥ ७ ॥
अंकतोऽपि ग्रंथाग्र० १२५२ । छ । छ । छ ॥

इतिश्रीयाकिनीमहत्तराधर्मसूनुभवविरहाङ्कसुप्रसिद्धश्रीमज्जैनशासनाम्बरतलमिहीरायमाणाचार्यश्रीहरिभद्रसूरिसंदब्धं श्रीषड्दर्शनसमुच्चयसूत्रं श्रीरुद्रपल्लीगणगणेशश्रीसङ्घतिलकसूरिशेखरपट्टप्रद्योतनाचार्यपुङ्गवश्रीविद्यातिलकापरनामश्रीसोमतिलकसूरिवरविनिर्मिता व्याख्या च परिसमाप्ता ।

---

१ चन्द्र । × सूर्यः । + °माना, टीकेयं नन्दताच्चिरम् ॥ ज. ।

# प्राचीनोऽज्ञातकर्तृको लघुषड्दर्शनसमुच्चयः ।

जैनं नैयायिकं बौद्धं, काणादं जैमनीयकम् ।
साङ्ख्य षड्दर्शनीयं, [ च ] नास्तिकीयं तु सप्तमम् ॥१॥
जैनदर्शने अर्हन् देवता,
जीवाजीवौ तथा पुण्यं पापमाश्रवसंवरौ ।
बन्धो विनिर्जरा मोक्षो, नव तत्त्वानि तन्मते ॥

प्रत्यक्षं परोक्षं चेति प्रमाणद्वयम्, नित्यानित्याद्यनेकान्तवादः, सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः, सकलकर्मक्षये नित्यज्ञानानन्दमयश्च मोक्षः ।

नैयायिकाः पाशुपता जटाधरविशेषाः । तेषां दर्शने ईश्वरो देवता, प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानि षोडश तत्त्वानि, प्रत्यक्षमनुमानमुपमानमागमश्चेति चत्वारि प्रमाणानि, नित्यानित्यैकान्तवादः, आत्मादिप्रमेयतत्त्वं, ज्ञानं मोक्षमार्ग', षडिन्द्रियाणि, षड् विषयाः षड् बुद्धयः सुखं दुःखं शरीरं चेत्येकविंशति (ति)प्रतिभेदभिन्नस्य दुःखस्यात्यन्तोच्छेदश्च मोक्षः ।

बौद्धा रक्तपटा भिक्षुकाः । तेषां दर्शने बुद्धो देवता, दुःखसमुदयमार्गनिरोधरूपाणि आर्यसत्यसंज्ञानि चत्वारि तत्त्वानि, प्रत्यक्षमनुमानं चेति द्वे प्रमाणे, क्षणिकैकान्तवादः, सर्वक्षणिकः सर्वनैरात्म(त्म्य)वासना मोक्षमार्गः, [स]वासन(ना)क्लेश(स)मुच्छेदे प्रदीपस्येव ज्ञानसन्तानस्योच्छेदश्च मोक्षः ।

कणादस्य चाचार्यस्येदं काणादं जटाधरविशेषवैशेषिकदर्शनम् । तत्र ईश्वरो देवता, द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानि षट् तत्त्वानि,

प्रत्यक्षमनुमानमागमश्चेति प्रमाणत्रयम्, नित्यानित्यैकान्तवादः, आत्मनः श्रवणमननिद(दि)ध्यासनसाक्षात्कारो मोक्षमार्गः, बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काररूपाणां नवानां विशेषगुणानामात्यन्तोच्छेदः मोक्षः।

जैमनीयं भट्टदर्शनम्। तत्र सर्वज्ञो देवता नास्ति किन्तु नित्यवेदवाक्येभ्य एव तत्त्वनिश्चयः, प्रत्यक्षमनुमानमुपमानमागमोऽर्थापत्तिरभावश्चेति षट् प्रमाणानि, नित्याद्य(द्वै)नेकान्तवादः, वेदविहितानुष्ठानं मोक्षमार्गः, नित्यनिरतिशयसुखाविर्भावश्च मोक्षः।

साङ्ख्यदर्शनं मरीचिदर्शनम्। तत्र केषाञ्चित् कपिल एव (देवता), पञ्चविंशतिस्तत्त्वानि, तथा हि—आत्मा प्रकृतिर्महानहङ्कारः, गन्धरसरूपस्पर्शशब्दाख्यानि पञ्च तन्मात्राणि ९, पृथिव्यप्तेजोवाय्वाकाशाख्यानि पञ्च भूतानि १४, एकादश चेन्द्रियाणि, तत्र घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षड् बुद्धीन्द्रियाणि २०, पायूपस्थवचःपाणिपादाख्यानि पञ्च कर्मेन्द्रियाणि २५, प्रत्यक्षमनुमानमागमश्चेति प्रमाणत्रयम्, नित्यैकान्तवादः, पञ्चविंशतितत्त्वज्ञानं मोक्षमार्गः, प्रकृतिपुरुषविवेकदर्शनाद् निवृत्तायां प्रकृतौ पुरुषस्य स्वरूपावस्थानं मोक्षः।

नास्तिका कापील(पालि)काः। तेषां दर्शने नास्ति सर्वज्ञः, न जीवः, न धर्माधर्मौ, न च तत्फलम्, न परलोकः, न मोक्षः, तथा च तन्मतम्—

एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः।
भद्रे! वृकपदं पश्य, यद्वदन्ति बहुश्रुताः॥

पृथिव्यप्तेजोवायवश्चत्वार्येव भूतानि, प्रत्यक्षमेवैकं प्रमाणम्, पृथिव्यादिभूतसङ्घात एव शरीरम्, मद्याङ्गेषु मदशक्तिरिव चैतन्यं तत्र जायते।

एते च नैयायिकादिप्रवादा अनन्तधर्मात्मके वस्तुनि स्वाभिप्रेतनित्यत्वादि धर्मावधारणात् शेषधर्मतिरस्कारेण प्रवर्तमाना दुर्णया उच्यन्ते, यथा– 'नित्य एव शब्दः' इत्यादि। दुर्णयबलप्रभावितसत्ताका हि खल्वेते प्रवादाः, तथा हि–नैगमनयदर्शनानुसारिणौ नैयायिकवैशेषिकौ, सङ्ग्रहनयानुसारिणः सर्वेऽपि मीमांसि(स)कविशेषा अद्वैतवादाः साङ्ख्यदर्शनं च, व्यवहारनयानुसारिणः प्रायश्चार्वाका नास्तिकाः, ऋजुसूत्रनयानुसारिणो बौद्धाः, शब्दादिनयावलम्बिनो वैयाकरणादयः। त एव च प्रवादा अनन्तधर्मात्मके[पु] वस्तुनि स्वाभिप्रेतनित्यत्वादिधर्मसमर्थनाप्रवणाः शेषधर्मस्वीकारतिरस्कारपरिहारेण प्रवर्तमाना नया उच्यन्ते, यथा 'अनित्यः शब्दः' इत्यादि। परस्परसापेक्षं सर्वनयमयं तु जिनमतम्, यथा 'स्यादनित्यः शब्द' इत्यादि। अत एवोच्यते–

परस्परापेक्षसर्वनयनिर्मितमार्हतम्।
मतं प्रमाणं स्याद्वादि श्रेयं श्रेयोर्थिभिर्बुधैः॥१

इति लघुषड्दर्शनसमुच्चयः समाप्तः।

---

अथैवं षड्दर्शनद्विकसमाप्तौ पूज्यश्रीतपोगणनायकशासनदिवाकरागमज्ञसूरिपुरन्दरश्रीमद्विजयप्रेमसूरीशशुविहितपट्टालङ्काराचार्यप्रवरविजयजम्बूसूरीश्वरैः सपाठान्तरटिप्पणकसंशोधनैर्विशदीकृतमतीवप्रयाससाध्यमेतदखिलग्रन्थस्य संपादनमपि समाप्तिमगात्। इति शुभं भवतु श्रीसंघस्य। श्रीवीरात्सं०२४७५, श्रावणशुक्ला ११, गुरुवासरः, पुन्यस्थलश्रीम्हेसानोपाश्रयः।

---

# शुद्धिपत्रकम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
| --- | --- | --- | --- |
| ०एपु | ०एतु | ६ | १ |
| ०काण्टेयिद्वि | ०काण्ठेयिध्वि | ,, | ५ |
| ०त्काद्यप | ०त्कद्यप | ७ | २० |
| सुगुणरत्नरयः | गुणरत्नसूरयः | १२ | २१ |
| ०मानतोपपत्तिमानरा० | ०मानितोपपत्तिमिर्निरा० | १८ | १३ |
| अन्यो | अतो | २७ | १२ |
| अतो पु. | अन्यो उं | ,, | २० |
| नानुमानं | नामानुमानं | ३५ | ५ |
| ०माह[१] | ०माह[१] | ३७ | १६ |
| मत्कर्षा० | उत्कर्षा० | ४१ | १२ |
| घेत्, मायर० | घेत्, मायर० | ५० | ४ |
| पृदरा.घा पं: १४ | पृदरा.घा)पं. | ५९ | १३ |
| ०लिङ्गमिति[४८] | ०लिङ्गमिति[४७] | ६४ | ४ |
| सजायते | संजायते | ६६ | १ |
| पक्ष | पक्ष | ८८ | १० |
| ०त्विक्तत्यादि | ०त्विक्तत्यादि | ९० | २ |
| * पक्ष | * पक्ष | ९४ | १३ |
| ०पन्ताम" (तत्वा० | ०पन्ताम पुद्गलाः।" (तत्वा० | ९७ | १६ |
| पुद्गलाः।" इति मृ० | इति मृ० | ९७ | १७ |
| त[प] इये० | त(प)म्मे० | १०३ | ४ |
| ०परेयग- | ०परेयय- | १११ | ३ |
| ०मयपेति | ०मनपेति | ११२ | १७ |
| ०मुंफित | गुंफित | ११८ | १२ |
| ०लित्रा | मुंफित | ११९ | ४ |
| परयारे | पयारे | १२३ | १३ |
| इत्परिगाढः | इत्पयगाढः | १२६ | २१ |

## अस्मिन्ग्रन्थे टिप्पनिकादौ सूचितसंक्षिप्ताक्षरपरिभाषा।

जं. आचार्यविजयजंबूसूरिचिद्रंजनकोशस्येयं प्रतिः, श्रीमुक्ताबाई ज्ञानमंदिर, डभोई।

पु. मुनिश्री पुण्यविजयजी शास्त्र संग्रहस्येयं प्रतिः, सागरनो उपाश्रय, पाटण।

ध. पंन्यासश्री धर्मविजयगणिपुस्तकसंग्रहस्येयं प्रतिः, खेत्रवसी उपाश्रय, पाटण।

प्र. प्रत्यन्तर।

आ. स. आत्मानन्द सभा। (भावनगर)

मु. मुद्रित।

पृ. पृष्ठ।

राजशे. आचार्य श्रीमद्राजशेखरकृत।

प. स. षड्द० समु०

सां. का. सांख्यकारिका।

स्या. मं. स्याद्वादमञ्जरी।

वृ. वृ. वृहद्वृत्तिः। (आचार्यगुणरत्नसूरिकृतश्रीतर्करहस्यदीपिकासंज्ञिका ष० स० टीका)

अ. सू. अध्याय सूत्र।

टि. टिप्पन।

प्र मी प्रमाणमीमांसा। (कलिकालसर्वज्ञआचार्यश्रीहेमचन्द्रसूरिरचित)

प्र श्रु. प्रथमश्रुतस्कन्ध।

दे० ला० देवचन्द्र लालभाई

इन्स्टी० इन्स्टीट्युट।

---

## संपादकमहोदयपूज्याचार्यदेवेशस्य काचित्साहित्यसेवा।

१ संक्रमकरणम् भाग १-२
( पूज्यपरमगुरुदेवाचार्यविजयप्रेमसूरीशकृत )
२ मार्गणाद्वारविवरणम् ,,
३ दीक्षामीमांसा उपर द्रष्टिपात (गु० )
४ न्यायसमीक्षा ,,
५ सचूर्णिटीकाद्वयोपेता कर्मप्रकृति.
६ टीकाद्वयोपेतश्रीपञ्चसंग्रह भा. १-२
७ विविध प्रश्नोत्तर भा. १-२ (गु०)
( स्वर्गस्थ पूज्यपरमगुरुदेवेश विजयदानसूरीशकृत )
८ पर्वतिथिप्रकाश (गु०) (सटीकतत्त्वतरंगिण्यनुवाद)
९ आराधनाविषयकतिथिसाहित्यदर्पण ( गु० )
१०. आत्मसखा याने विवेकदर्शन ,,
११ नित्यनियमो अने जीवनव्रतो ,,
१२ प्रश्नोत्तर त्होंतेरो ,,
१३ सित्तरीचूर्णि
१४ हीरप्रश्नोत्तराण्यनुवाद ( गु० ) ( मुनि चिदानन्दविजयकृत )
१५ श्री भीलडीया तीर्थ अने राधनपुर चैत्यपरिपाटी (गु०)
१६ नित्यस्मरणस्तोत्रादिसंदोह
१७ सटीकश्री षड्दर्शन समुच्चय ( आ. श्री विद्यातिलकीया टीका)
१८ सभाषा श्री तत्त्वतरंगिणी बालावबोध (प्राचीन गु० )
इत्यादिका

---